यमा इत्युक्ताः सप्त ते स्वराः षड्जादयः । पृथग्वा क्रुष्टादयः षड्जादिभ्योऽन्ये वा बोद्धव्या इति । एवं सति तत् तेषु क्रुष्टादिसंज्ञकेषु षड्जादिसप्तस्वरेषु मध्ये योऽसौ साम्नः संबन्धी क्रुष्टतम इव, इवेत्येवकारार्थे, अत्यन्तमुच्चैः स्वर एवास्ति गानकाले तं स्वरं देवा इन्द्रादय उपजीवन्ति तेन तृप्ता भवन्तीत्यर्थः । एवमुत्तरेष्वपि योज्यम् । यः च अवरेषाम् अवशिष्टानां षण्णां मध्ये प्रथमः मुख्योऽस्ति, तम् मनुष्या उपजीवन्ति । द्वितीयं गन्धर्वाप्सरसः गन्धर्वाः अप्सरसश्च उपजीवन्ति । तृतीयं गवादयः पशवः । चतुर्थं पितरः । किंच, ये प्राणिनः सर्वेषु ब्रह्माण्डेषु शेरते निवसन्ति, ते च । पञ्चमं स्वरम् असुररक्षांसि असुराश्च रक्षांसि च । योऽन्त्यः षष्ठः स्वरः तम् ओषधयो वनस्पतयश्च । यच्चान्यद् अनुक्तं जगत् जातमस्ति, तच्चेति । कृत्स्नजगतः सामोपजीवित्वप्रसिद्धिरुक्तापेक्षयेत्याह—तस्मादाहुः सामैवान्नमिति । साम ह्येषामुपजीवनं प्रायच्छदिति । यस्मादुक्तेन प्रकारेण देवादयः सामोपजीवन्ति तस्मात् सामैवान्नमिति ब्रह्मवादिन आहुः ब्रुवते । तदेवाह—हि यतः एषां देवादीनां सामोपजीवनं प्रायच्छत् प्रजापतिः अत आहुरित्युक्तप्रकारसामान्यत्वप्रसिद्ध्यनुवादोऽयम् ॥

---

1. A. सप्तते for सप्त ते Bl. om. ते; P. षड्जादयः पृथग्वा । क्रुष्टादयः पृथग्वा षड्जादिभ्यः for षड्जादयः...

2. B. Bl. (अ)न्य एव for (अ)न्ये वा; P. om इति; Bl. om. तत्.

3. Bl. (अ)र्थः for (अ)र्थे.

4. Bl. उच्च० for उच्चैः.

5. Bl. योज्यः for योज्यम्.

6. A. om च.

8. Bl. A. गवादिपशवः for गवादयः पशवः.

9. P. सर्वे for सर्वेषु; AB. Bl. om ते च.

11. Bl. जगत् for जगतः.

12. Bl. AB. -जीवनत्व for -जीवित्व०; Bl. AB. उक्तापेक्षा for उक्तापेक्षया; P. om. साम...प्रायच्छदिति.

13. P. om. यस्मादुक्तेन...... । तदेवाह-हि.

14. B. om. ब्रह्मवादिन आहुर्ब्रुवते.

15. B. om. हि; B. एतेषां for एषां. P. देवानां for देवादीनां.

16. A. सामान्यप्रसिद्ध; Bl. सामान्यत्वप्रसिद्ध्या for सामान्यत्वप्रसिद्धि.

भ - अथ सर्वस्या वाच उपांशुव्यतिरिक्तानि त्रीणि स्थानानि भवन्ति मन्द्रं मध्यममुत्तममिति । एकैकं स्थानं सप्तयमम् । क्रुष्टादयः स्वरा यमा उच्यन्ते । ते च उत्तरोत्तरं नीचा भवन्ति । यथोक्तं शौनकेन भगवता परिषदा[यां] शिक्षा[याम् ]—

"त्रीणि मन्द्रं मध्यममुत्तमं च
　　स्थानान्याहुः सप्तयमानि वाचः ।
अनन्तरश्चात्र यमोऽविशिष्टः
　　सप्त स्वरा ये यमास्ते पृथग्वा ॥"

(ऋ० प्रा० 13. 42-45) इति ।

**अनन्तरश्चात्र यमोऽविशिष्ट** इति । **च अत्र** एषु **अनन्तरो** यमेषु अनन्तरोऽव्यवहितो यतः **अविशिष्टः** । अस्पष्टविशेष इत्यर्थः । विप्रकृष्टो यमो भवेदेनं ज्ञातुं शक्यो न संनिकृष्ट इति । **सप्त स्वरा ये यमास्ते पृथग्वेति** । **ये यमा** इत्युक्ताः **सप्त ते स्वराः** षड्जादयः **पृथग्वा** षड्जादिभ्योऽन्ये क्रुष्टादय इति । एवं स्थिते सप्तानां यमानामुपजीविकानि भूतानि [वि]भज्य दर्शयति—**तद्योऽसाविति** । तदिति वाक्योपक्रमे निरर्थकः । तस्मिन्नुक्ते विषय इति वा । **यो [ऽसौ] क्रुष्टतम इव,** इवेत्येवकारार्थेऽत्र वर्तते, **साम्नः** संबन्धी क्रुष्टतमः **स्वरस्तं देवा** उपजीवन्ति । **योऽवरेषां** क्रुष्टादर्वाचीनानां स्वराणां **प्रथमस्तं मनुष्या** उपजीवन्ति । द्वितीयं **गन्धर्वा[प्सरसः]** गायनाप्सरस उपजीवन्ति । तृतीयं **पशवो** गवाश्वादय उपजीवन्ति । चतुर्थं **पितरो ये** चाण्डेषु शेरते द्विजा जन्तवस्ते चतुर्थमुपजीवन्ति । पञ्चम**मसुररक्षाꣳसि** असुरा रक्षांसि चोपजीवन्ति । **योऽन्त्योऽतिस्वार्यस्तमोषधयो वनस्पतय**श्चोपजीवन्ति ।

---

2. RAl. मध्यमूत्रमति for मध्यममुत्तममिति.

7. R. अनन्तरश्चान्त, Al. अनन्तरश्चानु for अनन्तरश्चात्र.

8. स्वरा ये *See* CN.

9. R. अनन्तरश्चान्त, Al. अनन्तरश्चात for अनन्तर०

10. अविशिष्टः *See* CN.

15. RAl. क्रुष्टतम इवेत्येन्न (R. न्ते) वकारु (R. र) ण्येत्यत्र (R. न्न) वर्तते for क्रुष्टतम इव० . . . वर्तते.

19. RAl. om. असुरा रक्षांसि.

20. RAl. वा for च; अतिस्वार्यः *see* CN.

यच्चान्यदुक्तेभ्यो जगज्जङ्गमं तच्चान्यमुपजीवन्ति । यस्मादुक्तेन प्रकारेण सामोपजीवन्ति देवादयस्तस्मादाहुर्ब्रह्मवादिनः "सामैव सर्वस्यान्नम्" इति । तस्मादित्युक्तस्य विवरणं साम ह्येषामुपजीवनं प्रायच्छद् इति ॥

## 9. उपजीवनीयो भवति य एवं वेद ॥ ३ ॥

सा - उक्तार्थस्य वेदितुः फलमाह—उपेति । वृत्तोऽर्थः ॥ ३ ॥

भ - अथ विदुषः फलं पूर्वोक्तमुपसंहरति—उपजीवनीयो भवति य एवं वेद [इति] ॥

## 10. तस्य ह वा एतस्य साम्न ऋगेवास्थीनि । स्वरो मांसानि । स्तोभा लोमानि ॥

सा - अथ गातव्यस्य साम्नः प्ररोचनार्थं प्रसङ्गाद्विशिष्टफलसाधनानि कानिचित्साम्नो ध्यानानि विदधाति । तत्रादौ पुरुषत्वध्यानायावयवकल्पनामाह—तस्य हेति । तस्य ह वै उक्तमहिमोपेतस्यैवैतस्येदानीं निर्दिश्यमानस्य साम्नः ऋगेवास्थीनि । ऋचः साम्नो मुख्याधारत्वादस्थित्वकल्पनम् । स्वराणामपि ऋगाश्रितत्वादस्थिबहिर्भूतमांसत्वकल्पनम् । स्तोभानामपि ततोऽपि बहिर्विषयत्वाल्लोमत्वकल्पनम् ॥

भ - अथ साम पुरुषाकारेण निरूपयति—तस्य ह वेति । स्वरः क्रुष्टादिलक्षणः । सुज्ञातमितरदिति । अस्मिन् प्रकरणेऽनुष्ठानानधिकृता गुणा उच्यमानाः प्रचोदनार्थास्तथा ज्ञानेन समृद्धिहेतव इति द्रष्टव्यम् । केवलार्थानुव्याख्याने प्रयोजनाभाव इति ॥

---

8. My om. ह वा एतस्य.

10. P. प्रजापतिरादिष्टफलसाधनस्वाध्यायाध्ययनार्थं च for अथ...... साधनानि ; Bl. अधिकृतस्य for अथ गातव्यस्य.

11. B. अध्ययनानि for ध्यानानि; P. पुरुषत्वेनावयव० for पुरुषत्व०...

13. After ऋगेवास्थीनि A. continues तस्य ह वा एतस्य योग्यऋचः साम्नो B. Bl. एवमुत्तरयोरपि तस्य ह वा एतस्य इति योज्यम् । ऋचः...

14. P. भूतत्वेन् for भूत.

15. B. om. अपि.

18. R. उच्यतानात्, Al. उच्यताना: for उच्यमानाः.

**11.** यो ह वै साम्नः स्वं यः सुवर्णं वेद स्वं च ह वै साम्नः सुवर्णं च भवति । स्वरो वाव साम्नः स्वं तदेव सुवर्णम् ॥

सा - अथ तस्यैव साम्नः स्वत्वसुवर्णत्वयोर्ध्यानमाह—यो हेति । यो ह वै साम्नः स्वं द्रव्यं वेद यश्च स्वविशेषरूपं सुवर्णं शोभनवर्णोपेतं हिरण्यं वेद स तद्द्वयस्य वेत्ता स्वयमेव साम्नः स्वसुवर्णयोः स्थानीयो भवति, ज्ञातं सामविशिष्टफलसाधनं भवतीत्यर्थः । किं तत् साम्नः स्वं सुवर्णं चेत्याकाङ्क्षायामाह—स्वरो वावेति । क्रुष्टादिसप्तभेदभिन्नः स्वर एव साम्नः स्वं स्वराधीनत्वात् सामस्वरूपस्य तदेव स स्वर एव सुवर्णम् ॥

भ - अथान्यज्ज्ञातव्यविवक्षुस्तत् ज्ञानं तावत् प्ररोचयति—यो हेति । स्वं धनं सुवर्णं धनविशेष इति । किं तदुभयं यस्य ज्ञानेन साम्नः स्वं सुवर्णं च भवतीति तत्राह—स्वरो वा वेति । स्वरः क्रुष्टादिलक्षणः । अथ वर्णाश्रयाणां स्वराख्यवर्णानामकारादीनां गीत्यात्मके विकारः स एव धनं सामान्यम्, विशेषश्च सुवर्णात्मक इति । किं पुनस्तत्साम्नः स्वत्वं सुवर्णत्वं च वेदितुं पुरुषार्थात्मकं विवक्षितम्? उच्यते । साम्नः संबन्धी स्वरो यथा स्ववत् सुवर्णवच्च प्रिय उपजी[वनी]यो भवति तद्वदुपजीवनीयो भवतीत्युक्तम् । इह तु धनवदिति विशेष इति ॥

---

1. BMS. स्वं ह्य स्वर्णं (B. adds च after स्वर्णं), T. स्वर्जह्य स्वर्णं, My. स्वर्ग्यं सुवर्णं for स्वं यः सुवर्णं.

2. BMyMST. स्वर्णं for सुवर्णं

4. PA. om. साम्नः; AB. स्व for स्वत्व.

5. P. adds उद्गाता after first यः ; PB. om. च; P. om. शोभन०......०भवतीत्यर्थः.

6. B. द्रव्यस्य for तद्द्वयस्य.

7. P. om. साम्नः स्वं सुवर्णं च.

8. A. क्रुष्टादिभिः सप्तभिः नवस्वरः' Bl. B. क्रुष्टादिसप्तभिन्नस्वरः for क्रुष्टादि...स्वरः.

9. P. सारिष्ठं सामस्वरूपम् for स्वराधीनत्वात् सामस्वरूपस्य; Bl. P. om. सः.

10. RAl. ज्ञातव्यं विवक्ष for ज्ञातव्य०; R. प्रचोदयति for प्ररोचयति.

16. RAl. उपजीवजीवनीयः for second उपजीवनीयः.

**12. यो ह वै साम्नः प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च । वाग्वाव साम्नः प्रतिष्ठा । यद्वेतद्वागित्यृगेव सा । ऋचि साम प्रतिष्ठितम् ॥ ४ ॥**

सा - अथान्यत्साम्नो ध्यातव्यं स्वरूपमाह—यो हेति । यः उद्गाता **साम्नः प्रतिष्ठाम्** आस्पदं स्वकर्माश्रयं **वेद** साक्षात् स उद्गाता **प्रति ह तिष्ठति** प्रतिष्ठितः खलु । कुत्रेति तदुच्यते—**अस्मिंश्च लोके** भुवि । **अमुष्मिंश्च लोके** स्वर्गे । उभयत्र परस्परापेक्षश्चशब्दः । इह जीवन् पश्वादिभिः प्रतिष्ठितो भवति; देहान्ते स्वर्गे संकल्पसिद्धैर्भोगैरित्यर्थः । साम्नः का प्रतिष्ठेति चेत्, उच्यते—**वाग्वाव** वागेव **साम्नः प्रतिष्ठा** । अत्र वाक्-शब्दस्य ऋक्परतामाह—यद्वेतदिति । 'यद् उ एतत्' इति पदच्छेदः । उ-शब्द एवकारार्थे । वागेवेति यदेतदस्ति, सा ऋगेव । अत्र ऋचोऽतिरिक्तस्य अन्यस्य वचसो वा इन्द्रियस्य वा अप्रयोजनत्वादिति । तावदृगाश्रयत्वमाह—**ऋचि** गायत्र्यादिच्छन्दोबद्धायां **साम** गीत्यात्मकं रथन्तरादि **प्रतिष्ठितम्** ॥ ४ ॥

भ—अथान्यदपि वेदनीयमस्तीति सप्ररोचनमाह—यो हेति । हेति विनिग्रहार्थः । वै एवकारेण समानार्थः । साम्नः प्रतिष्ठाज्ञानात् प्रतितिष्ठत्येवोभयोर्लोकयोः । इह लोके यश्च चिरं प्रतिष्ठाय अमुष्मिंश्च देहान्ते प्रतितिष्ठतीति । का साम्नः प्रतिष्ठा यां विद्वान् प्रतितिष्ठतीति तां दर्शयति—

---

3. ABMSTS. यद्वैतद् for यद्वेतद् .

4. Bl. AB. गातव्यस्व० for ध्यातव्यं स्व०; Bl. उच्छ्रितां for उद्गाता.

5. P. om. साक्षात्; AB. om. उद्गाता, Bl. विद्वान् for स उद्गाता.

8. A. साम्नां for साम्नः.

9. Bl. च for चेत्; Bl. P. om. वागेव.

10. A. यच्चैतत्, B. यद्वैतद् for यद्वेतद्

11. B. ऋगेवेति for ऋगेव; Bl. B. ऋग्व्यति for ऋचोऽति

12. AB. वचसो ग्रन्थिरिन्द्रियस्य चाप्रयोजकत्वात् Bl. वचसो ग्रन्थेन्द्रियस्य वाप्रयोजकत्वात् for वचसो वा० ...अप्रयोजनत्वात्.

16. वै *see* CN.

17. RAl. तिरं for चिरं

18. का साम्नः... *See* CN.

**वग्वाव साम्नः प्रतिष्ठा** । किं पुनरिह वागुच्यते ? किं शब्दमात्रम्, उत शब्दविशेषः ? अथ वागिन्द्रियमिति शब्दविशेष इत्याह—**यद्वेतद्वागित्यृगेव सा** । "यत् उ एतत्" इति पदच्छेदः । यत् खल्वेतद् वागित्युक्तं वस्तु सा ऋगेवेति । कारणमाह—**ऋचि साम प्रतिष्ठितम्** । ऋचि हि साम प्रतिष्ठितम् ॥

**13. स यदा गायत्रं बृहत्यां गायति ; बार्हतं जगत्याम् ; जागतं त्रिष्टुभि ; समतां चापद्यते । तस्मादेतत् सामेत्याह । समा उ ह वा अस्मिꣳश्छन्दांसि साम्यादिति तत्साम्नः सामत्वम् ॥**

सा - अथ निर्वचनेन साम प्रशंसति—**स यदेति** । सः उद्गाता **यदा** यस्मिन् प्रयोगकाले **गायत्रं** गायत्रीच्छन्दस्कायामृच्युत्पन्नं साम **बृहत्यां** बृहतीच्छन्दस्कायामृचि **गायति** तदा **समतामापद्यते** इति संबन्धः । तथा हि—**"अश्वं न त्वा"**—(साम० i. 17) इत्येतस्यां गायत्र्यामृच्युत्पन्नं वारवन्तीयसंज्ञकं गायत्रं साम, **"अभि त्वा शूर नोनुमः"**—(साम० i. 233) इत्येतस्यां **बृहत्यां** गीयमानं सत् **समतामापद्यते** । न्यूनच्छन्दस्कायां गीयमानं परिमितं साम अधिकच्छन्दस्कायां गीयमानमपि परिमितमेव भवति ; नाक्षरस्वरस्तोभविकारैरतिरिक्तं भवति । एवमुत्तरेष्वपि योज्यम् । तथा बृहत्यां "पुनानः सोम"—(साम० i. 511) इत्यस्यामुत्पन्नं **बार्हतं** साम **जगत्यां** जगतीच्छन्दस्कासु **"यज्ञायज्ञा"** (साम० i. 35)

---

2. Al. ऋगेवेति for ऋगेव सा
3. Al. om. 'यत् . . . . . ०ऋऽगेवेति.
6. MyMTAS. यथा for यदा
7. My. समन्तद्वापद्यते, B. सामतां चा० for समातां चा०
8. My. साममाहुर्वा for समा उ ह वा
9. MTS. साम्न्यात् for साम्यात्. Sāyaṇa adapts साम्न्यात्
10. Bl. B. गाता for उद्गाता
15. Bl. P. om. बृहत्यां
16. PAB. om. गीयमानं Bl. B. अपरिमितं for परि०.
19. P. adds ऋक्षु after ०च्छन्दस्कासु.

“अभिप्रियाणि” (साम० i. 554) “वृषा मतीनाम्” (साम० i. 559)—इत्यादिषु गीयमानं समतामापद्यते । तथा जागतं “प्रक्षस्य वृष्णः” (साम० iii. 603) इत्यस्यां जगत्यामुत्पन्नं “मूर्धानं दिवः”—(साम० i. 67) इत्यादिषु त्रिष्टुप्छन्दस्कासु गीयमानं समतामापद्यते । यस्मादेवं तस्माद् गीत्यात्मिकामृचं सामेत्याह ब्रूते विद्वज्जनः । न केवलमस्य बहूनां छन्दसां समत्वात् सामत्वम्; अपि तु अस्मिन्, जातावेकवचनम्, एषु बहुषु सामसु रथन्तरादिषु प्रत्येकं छन्दांसि गायत्र्यादीनि समा उ ह वै । उ इत्यवधारणे । ह वा इति प्रसिद्धौ । समान्येव खलु । तत्रोपपत्तिमाह—साम्न्यादिति । सामान्यशब्दात् समशब्दसमानार्थात्—मकारस्य दीर्घलोपः । दीर्घलोपे साम्न्यमिति भवति । यद्वा समानाम्नातत्वं साम्न्यम् । आम्नाय इत्याम्नम् । समानं च तदाम्नं चेति समानाम्नम् । “समानस्य छन्दसि—” (पा. 6. 3. 84) इत्यादिना समानशब्दस्य सत्वे कृते साम्नमिति भवति । तस्य भावः साम्न्यम्, तस्मात् साम्न्यात्, समानाम्नातत्वादित्यर्थः । बहूनां हि

---

2. P. adds सत् and Bl. साम after गीयमानं.

3. P. एतस्यां for अस्यां.

4. B. सामताम् for समताम्.

5. PBl. गीत्यात्मिकासु साम० for गीत्या० P. om. अस्य.

6. Bl. adds इति after अस्मिन् B. एषां for एषु.

7. A. om. second उ.

8. A. om. ह. AB. Bl. सामानि for समानि

9. P. समानशब्दः समशब्दसमानार्थः । अकारदीर्घलोपे साम्न्यादिति for सामान्य० . . . साम्न्यमिति भवति । Bl. आङ्कारस्य for मकारस्य.

10. BBl. साम्यम् for साम्न्यम्. AB. Bl. समानत्वं साम्यं for समानाम्नातत्वं साम्न्यम. P. om. अम्नाय इत्याम्नम.

11. Bl. आम्नातं for first आम्नम्

12. P. समानस्य for समान०.

13. Bl. साम्यम् for साम्न्यम्; A. साम्यात् B. समानात् Bl. सामान्यात् for साम्न्यात्; Bl. (आ)म्नत्वाद् for (आ)म्नातत्वाद्.

साम्नां सामनमेकं छन्द आम्नायते । तत् तस्मात् समानायामृचि बहूनि सामानि गीयन्ते । तस्मादपि साम्नः सामत्वं संपन्नमिति ।

म - समत्वात् सामेति संग्रहेणार्थः । बहूनां छन्दसां समत्वा[त्] साधारणत्वात् समानायामृचि बहूनां साम्नां गीयमानत्वा[त्] वा सामेति । साम्नः तावत् समत्वं दर्शयति—[स] सामगानं कुर्वन् यदा गायत्र्यामुत्पन्नं साम बृहत्यां गायति, यथा वारवन्तीयम् "अभि त्वा शूर नोनुमः" इति बृहत्याम् । यथा वाथर्वणं "पुनानः सोम धारय" इति बार्हतं बृहत्यामुत्पन्नं जगत्यां गायति; यथा "यज्ञायज्ञा"-, "अभिप्रियाणि", "वृषामतीनाम्" इत्यादिषु; जागतं जगत्यां "प्रक्षस्य वृष्णः" इत्यस्यामुत्पन्नं "मूर्द्धानं दिव" इति त्रिष्टुभि गायति तदा समतामापद्यते स्तोभतो विकाराच्च । तस्मादेतत् सामेत्याह श्रोत्रिय [श्चाख्या] ति । समा समानि छन्दांसि, उ ह वै इति त्रयो वाक्यालंकार्याः, अस्मिन् साम्नीति जातावेकवचनम् । कथं छन्दसां साम्नि समत्वमित्यत्राह—साम्यादिति । बहूनां साम्नामेकं छन्दः सममाम्नायते । बहुसामानि छन्दांसि हि । साम्नां समानत्वे छन्दोबहूनां साम्नः गीयमानत्वाच्च सामशब्दप्रवृत्तिरिति ॥

14. क्रुष्टः प्राजापत्यो ब्राह्मो वा वैश्वदेवो वादित्यानां प्रथमः साध्यानां द्वितीयोऽग्नेस्तृतीयो-वायोश्चतुर्थः सौमो मन्द्रो मित्रावरुणयोरतिस्वार्यः ॥ ५ ॥

---

1. P. om. तत् and reads यस्मात् for तस्मात्.
2. P. adds तत् before तस्मात्.
3. बहूनां *See* CN.
5. RAl. ०गानां. for ०गानं.
8. RAl. यज्ञा यज्ञीयम् for यज्ञायज्ञा.
9. R. प्रक्षस्य वृष्ण्या, Al. प्रज्ञस्य वृष्णः for प्रक्षस्य . . . . RAl. add भास after उत्पन्नं.
11. श्रोत्रियः *See* CN. R. सामानि for समानि.
12. जातावेकवचनम् R. *See* CN.
14. RAl. समसाम्नायते for समाम्नायते ; साम्नां *See* CN.
18. RAl. सोमः for सौमः

सा - अथ क्रुष्टादिसप्तस्वराणां क्रमेण देवता आह—क्रुष्ट इति । यः क्रुष्टाख्य उत्तमः स्वरोऽस्ति तस्य प्रजापतिर्ब्रह्मा विश्वेदेवास्त्रयो विकल्पेन देवताः । प्रजापतिर्विराट् । ब्रह्मा हिरण्यगर्भ इति विवेक. । शिष्टो निगदव्याख्यातः । मन्द्रः अवरेषां मध्ये पञ्चमः स्वरः । अतिस्वार्यः षष्ठः ॥ ५ ॥

भ - अथ क्रुष्टादीनां सप्तानां नानादेवत्वेष्वपि सामसु साधरणीर्देवता आह—क्रुष्ट इति । अवरेषां पञ्चमो मन्द्रसंज्ञः स सोमदेवत्यः । इतरत् स्ववगतम् । एताः स्वराभिमानिन्यो देवतास्त्वन्यास्तु ऋकुरागातावत्! । (ऋग्वाग्देवतावत् ?) यथा रथन्तरस्य स्वरो न निन्द्र (!) इति ॥ ५ ॥

15. ते देवाः प्रजापतिमुपाधावन् । तेऽब्रुवन् "कथं नु वयं स्वर्गं लोकमियाम" इति । तेभ्य एतान् यज्ञक्रतून् प्रायच्छत् "एतैः लोकमेष्यथ" इति । तैः स्वर्गं लोकमायन् ॥

सा - अथ यज्ञानधिकारिणां द्विजातीनां स्वर्गादिफलाय सामाध्ययनं विधित्सुस्तदधिकारिणां स्वर्गफलाय प्रजापतिर्यज्ञक्रतून् प्रायच्छदित्याह—ते देवा इति । "स वा इदं विश्वं भूतमसृजत" (सा. ब्रा. I. 1. 6) इत्युक्तेषु देवादिभूतजातेषु मध्ये ते देवाः केचिद्देवतात्मकाः स्वर्गाख्यसुखविशेषोपायज्ञानार्थं प्रजापतिं स्वपितरम् उपाधावन् अभिप्राप्ताः । तेभ्यः स्वर्गसाधनत्वेन एतान् प्रौढब्राह्मणषड्विंशयोरभिहितान् एकाहाहीनसत्रात्मकान् यज्ञक्रतून् यज्ञकर्माणि प्रायच्छत् । ते तैः स्वर्गं प्राप्ताः । सुबोधमन्यत् ॥

---

2. P. ०देवा वा त्रयः for ०देवास्त्रयः.
3. B.Bl. शिष्टं स्पष्टम्, A. श्लिष्टे. . .for शिष्टो नि०.
4. A. पञ्चमस्वरः अतिस्वार्यान्तः । अर्थः स्पष्टः for पञ्चमः......षष्ठः ॥
6. RAl. ०संज्ञत्स सोमः दे० for संज्ञः...; Al. सुज्ञातम्. for स्ववगतम्.
7. देवताः *See* CN.
9. My. om. तेऽब्रुवन्.
10 & 11. My. स्वर्ग्यं for स्वर्गं.
13. A. B. देवादीनां for द्विजातीनां.
16. P. देवादिषु for देवादि०
19. Bl. एतैः for ते तैः.

भ - इत्येवं बहुधास्तुतसामयज्ञसाधनफलकामानां विधित्सुश्चाधिकारिणि प्रस्तावार्थमाह—ते देवा इति । ते सृष्टेषु तेषु केचिद्देवात्मकाः । एतान् पूर्वोक्तान् यज्ञक्रतून् याज्ञात्मकानि कर्माणि । सुज्ञातमितरदिति ॥

**16. स्वर्गं लोकमेति य एवं वेद ॥ ६ ॥**

सा - अथोक्तवेदनाफलमाह—स्वर्गमिति । स्पष्टोऽर्थः ॥ ६ ॥

भ - कामोऽय[मिकाहा]हीन[सत्रात्मका] यज्ञक्रतवः स्वर्गसाधना इति विद्वान् स्तौति—स्वर्गं लोकमिति ॥ ६ ॥

**17. तेषामहीयन्ताजाः पृश्नयो वैखानसा वसुरोचिषो ये चापूता ये च कामेप्सवस्तेऽब्रुवन् "कथं नु वयं स्वर्गं लोकमियाम" इति । तेभ्य एतत् स्वाध्यायाध्ययनं प्रायच्छत्, तपश्चैताभ्याꣳ स्वर्गं लोकमेष्यथेति । ताभ्यां स्वर्गं लोकमायन् ॥**

सा - इदानीं यज्ञानधिकारिणां फलाय साम, स्वाध्यायाध्ययनं, तपश्च प्रायच्छदित्याह—तेषामिति । तेषां प्राजापतिसृष्टानां मध्ये केचन देवव्यतिरिक्ता अजपृश्न्यादयः अहीयन्त यागानधिकारेण स्वर्गफलहीना अभवन् । अजादयः ऋषिगणाः । वैखानसाः केचन शतसंख्याका मन्त्रदृशः । तथा ये चापूताः यागसधनाध्ययनादिजन्यशुद्धिरहिताः । ये च कामेप्सवः

---

2. सृष्टेषु *See* CN.

5. Bl. वेदितुः for उक्तवेदना.

6. R. om. this sentence. Al. कामोऽयमघहीनाः for कामो. . .

8. MTA. प्रश्नयः for पृश्नयः.

13. P. महाफलाय for फलाय; A. सामस्वाध्यायाध्ययने for साम स्वा० .

14. A Bl. प्रायश्चित्तम् for प्रायच्छत् .

15. A. खङ्ग०, P. खलु for अज; A. ०फलतो हीनाः, Bl. फलता. . .for फलहीनाः.

17. Bl. AB. om. जन्य.

शुद्धा अपि तुच्छभूतैहिकफलैकतत्परा उक्तव्यतिरिक्ताः, यज्ञाधिकारेण हीनाः अभवन्, ते सर्वे प्रजापतिं कथं नु इदानीं स्वर्गमियामेत्यब्रुवन्। स चोक्तः प्रजापतिः तेभ्यः अजादिभ्यः स्वाध्यायाध्ययनं तपश्च दत्त्वा एताभ्यां स्वर्गं लोकमेष्यथेत्यब्रवीत्। ते च ताभ्यां स्वर्गं लोकमायन्॥

भ - अथ यज्ञेऽप्यनधिकारिणो दर्शयितुमाह — तेषामिति। तेषां प्रजापतिसृष्टानां भूतानां मध्ये अहीयन्त यज्ञाधिकारात् यज्ञफलाद्वा स्वर्गात्। अजाः प्रश्नय इत्यादयः पूर्वे ऋषिगणाः। वैखनासा नाम केचिन्मुनयः शतसंख्याः, वसुरोचिषो नाम सहस्रसंख्याः। ये चापूता अन्ये पूर्वोक्तेभ्यः, ये च कामेप्सवः यज्ञानुष्ठायिनां मध्ये अभिसंहितक्षुद्रफलास्ते चाहीयन्त स्वर्गसाधनेभ्यो यज्ञेभ्य इति। तेऽब्रुवन "कथं नु वयं स्वर्गं लोकमियाम" इत्यादिरनुवाकशेषो निगदसिद्धः। तत्रापूतानां तथा त्वरेषामुभयमपीति द्रष्टव्यम्॥

18. स्वर्गं लोकमेति य एवं वेद य एवं वेद ॥ ७ ॥

सा - अथ वेदितुः फलमाह—स्वर्गमिति। स्पष्टोऽर्थः। य एवं वेदेत्यभ्यासः खण्डसमाप्त्यर्थः॥ ७ ॥ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये प्रथमः खण्डः॥ ७ ॥ ॥ १ ॥

भ - स्वर्गमिति। द्विरुक्तयोऽर्थसमाप्तिद्योतिका इति॥

॥ इति प्रथमोऽनुवाकः ॥

---

1. P. तु कृतैहिकफलैकतत्पराः AB. तुच्छभूतैः क्रतुफलैक० for तुच्छ...।
2. AB. Bl. om. न.
6. RAl. add यं after अहीयन्त.
7. RAl. अज्ञाः for अजाः.
10. RAl. तेषु (ष Al) वत् for तेऽब्रुवन्.
11. RAl. ०शेषा for ०शेषो ; Al. ०सिद्धिः for ०सिद्धः.
13. A. repeats यं एवं वेद.
14. P. (इ) ति खण्डसमाप्त्यर्थमभ्यासः for (इ)त्यभ्यासः......Bl. om. य एवं वेदेति and reads खण्डसमाप्त्यर्थोऽभ्यासः।

# द्वितीयः खण्डः

## 1. अथातस्त्रीन् कृच्छ्रान् व्याख्यास्यामः ॥ १ ॥

सा - प्रथमखण्डे प्रजापतिः कृत्स्नं जगत् सृष्ट्वा तस्योपजीवनाय साम, स्वर्गप्राप्त्युपायत्वेन यज्ञक्रतूंश्च प्रादात् । तत्र देवास्तथा स्वर्गं लोकमगमन् । तेषां मध्ये अजाः पृश्नय इत्यादीनां स्वर्गं प्राप्तुमशक्तानां स्वाध्यायाध्ययनं तपश्च प्रादादित्युक्तम् । तत्र स्वाध्यायाध्ययनम् उत्तरत्र विधास्यते । इह तु तपो विधातुमादौ प्रतिजानीते—अथेति । अथशब्दोऽत्रानन्तर्ये वर्तते । अथ अनन्तरम् । अतःशब्दो हेतुवचनः । यतोऽपूतानां यज्ञाद्यशक्तानां च कृच्छ्रादिलक्षणतपोभिर्विना शुद्ध्यभावात् न स्वर्गप्राप्तिः, अतः इत्यर्थः । त्रीन् कृच्छ्रान् कृच्छ्रातिकृच्छ्रकृच्छ्रातिकृच्छ्रभेदेन त्रिविधान् तपोविशेषान् व्याख्यास्यामः । विविच्य आसमन्तात् कथयिष्याम इत्येवं प्रतिज्ञा ॥ १ ॥

भ - तपो नैकविधम् । तत्र वक्ष्यते प्रथमं तावत् कृच्छ्रोऽतिकृच्छ्रः कृच्छ्रातिकृच्छ्र इति त्रीणि तपांसि चतुष्टयं नेति प्रतिजानीते—अथात इति । अथ अनन्तरं यज्ञक्रतूनां व्याख्यानात् । ततः यतः कृच्छ्राधीना शुद्धिरपूतानां तस्मात् त्रीन् कृच्छ्रान् कृच्छ्रसंज्ञान् तपोविशेषान् व्याख्या-

---

3. B. प्रथमाध्याये for प्रथमखण्डे.

4. ABl. आयन् for अगमन्; P. Bl. om. लोकं.

5. P. Bl. तेषु for तेषां.

7. AB. om. अथ अनन्तरम् ।

8. AB. (अ)व्रतानां P. (अ)जपघ्नीनां for (अ)पूतानां.

9. A. ०लक्षणं तपोऽतीव विध्यभावन्न स्वर्ग०; B. ०लक्षणं तपो विना —धीन्त स्वर्ग० for लक्षणतपोभिः...स्वर्ग०.; Bl. अधिकाराभावात् for शुद्ध्यभावात्.

11. AB. कथयामः for कथयिष्यामः AB. प्रतिज्ञाता for प्रतिज्ञा.

13. R. चतुतयन्त, Al. चतुतयन्तु for चतुष्टयं.

स्यामः । विविधं(च्य ?) प्रब्रूम इति ब्राह्मणां(णं) सम्राडितो (सामान्यतो ?) वाक्यम् । अथवा चापूता इत्युक्तं परामृश्यते उक्ताद्यङ्गकल्पादनन्तरमिति ॥ १ ॥

## 2. हविष्यान् प्रातराशान् भुक्त्वा तिस्रो रात्रीर्नाश्नीयात् ।

सा - अथ कृच्छ्रस्वरूपं तावद्विधत्ते—हविष्यानिति । **तिस्रो रात्रीः**, अत्र रात्रिशब्दस्तत्प्रतियोगिकमहरपि लक्षयति । त्रीनहोरात्रानित्यर्थः । **नाश्नीयात्** न भुञ्जीत । त्रिष्वहोरात्रेषु भोजनं न कुर्यादित्यर्थः । किं कृत्वा ? **प्रातराशान्** प्रातःशब्दोऽत्राहर्लक्षकः । प्रातरश्यन्ते भुज्यन्ते इति प्रातराशाः, तादृशान्, **हविष्यान्** हविषि योग्यान्, क्षारलवणादिवर्जितान् **भुक्त्वा** दिनत्रयेऽपि अहनि सकृदेव भुक्त्वा रात्रौ नाश्नीयादित्यर्थः ॥

भ - कृच्छ्रान् तावदाह—हविष्यानिति । आदौ **तिस्रो रात्रीः** त्रीण्यहोरात्राणीत्यर्थः । हविषि योग्यान् क्षारलवणवर्जितान् **प्रातराशान्**, शब्दादिलक्षणार्थः प्रातः अहनि अश्यन्ते भुज्यन्ते इति प्रातराशाः, तान् हविष्यान् भुक्त्वा ततो नाश्नीयात् । दिवैव सकृदश्नीयादित्यर्थः ॥

## 3. अथापरं त्र्यहं नक्तं भुञ्जीत ।

सा - एवं द्वादशरात्रिदिवससाध्ये कृच्छ्रे प्रथमदिनत्रयनियममुक्त्वा द्वितीयदिनत्रयनियममाह—**अथेति** । अथ प्रथमत्र्यहनियमानन्तरम् **अपरं त्र्यहं** अपरेषु द्वितीयदिनत्रयेषु **नक्तं** रात्रौ **भुञ्जीत** अश्नीयात् । हविष्यमिति शेषः ॥

---

1. विविधं *see* CN.
2. चापूताः *see* CN.
6. AB. Bl. शब्देन for शब्दः ; Bl. अहोरात्रम् for अहः; A. अभि for अपि; P. om. अपि.
7. AB. Bl. add. इत्यर्थः after भुञ्जीत; AB. Bl. om. इत्यर्थः.
9. Bl. योज्यान् for योग्यान्.
10. P. om. अपि.
12. Al. हविषः, R हविष्ये for हविषि.
13. Al. R. अजिश्यन्ते भुञ्जीत इति for अश्यन्ते...
16. B. om. रात्रि; P. कृच्छ्रे for कृच्छ्रे.
17. P. ०त्रये for त्रय० ; P. विधत्ते for आह.
18. P. परेषु for अपरेषु P; हविरिति for हविष्यमिति.

म - अथापरं त्र्यहं नक्तमेव भुञ्जीत नाहनि ॥

## 4. अथापरं त्र्यहं न कंचन याचेत् ।

सा - अथ तृतीयदिनत्रयनियमं विधत्ते—अथेति । अथ द्वितीयत्र्यह-नियमानन्तरम् अपरं त्र्यहम् अपरेषु तृतीयदिनत्रयेषु **न कंचन** कमप्यात्मीय-मन्यं वा पुरुषं भोजनार्थं **याचेत्** । अयाचितं यद्यागच्छेत् तर्हि हविष्यं भुञ्जीतेत्यर्थः ॥

म - अथापरं त्र्यहं न कंचन आत्मीयम् [अन्यं] वा याचेदशनीयम् । यदि किंचित् स्वय[म]याचितं लब्धमशनं हविष्यं तदश्नीयात् । अलाभे अर्थादनशनमिति सिध्यति ॥

## 5. अथापरं त्र्यहमुपवसेत् ।

सा - अथ चतुर्थदिनत्रयनियमं विधत्ते—अथेति । **अथ** अनन्तरम् अपरेषु चतुर्थदिनत्रयेषु नाश्नीयादित्यर्थः । एतत् कृच्छ्रस्वरूपमुच्यते । तथा चास्योक्तं लक्षणम्—

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परं च नाश्नीयात् प्राजापत्यं चरन् द्विजः ॥"

(म० स्मृ. ११. २११.)

इति ॥

म - अपरं त्र्यहमुपवसेत् । उपवासोऽनशनमिति ॥

## 6. तिष्ठेदहनि रात्रावासीत क्षिप्रकामः ।

---

3. ABBl. om. नियमं.
5. Bl. om. पुरुषं.
6. P. भुञ्जेत् for भुञ्जीत.
7. RAl. यावत् for याचेत्.
8. लब्धम् *See* CN.
9. RAl. अर्थानदर्शनम् for अर्थादनशनम्.
10. My. उपवसन् for उपवसेत् .
12. P. om. उच्यते.
13. AB. om. च Bl. om. अस्य.

सा - अथ कृच्छ्रादिफलभूतशुचित्वादेः क्षिप्रकारित्वं कामयमानस्य नियमविशेषं विधत्ते—तिष्ठेदिति । क्षिप्रकामः विहितशुचित्वादिफलं शीघ्रं मे स्यादिति कामयमानः अहनि दिवा तिष्ठेत् उत्थितो भवेत् । नासनशयनादिकं कुर्यादित्यर्थः । तथा रात्रावासीत उपविशेन्न शयनोत्थाने कुर्यादित्यर्थः ॥

भ - इत्यनशननियममुक्त्वा अथ व्रत[नियमा]नाह—तिष्ठेदहनीत्यादिना । क्षिप्रकामस्य तावद्विशेषमाह—तिष्ठेदिति । क्षिप्र[म]विलम्बेन फलं भूयादिति कामयमानः । किमिदं क्षिप्रत्वं नाम? वक्ष्यमाणस्य शुचित्वादेः उत प्रकृतस्य? शुचित्वादिसाधनस्य कृच्छ्रस्य फलानामपि कृच्छ्रादयः क्वचित् क्वचिद्विधीयन्ते । तेषामिदं प्रासङ्गिकं वचनम् ॥

**७. सत्यं वदेत् । अनार्यैर्न संभाषेत । रौरवयौधाजये नित्यं प्रयुञ्जीत । अनुसवनमुदकोपस्पर्शनमापोहिष्ठीयाभिः ॥**

**अथोदकतर्पणम् । नमोऽहमाय मोहमाय मंहमाय धून्वते तापसाय पुनर्वसवे नमो नमः । मौञ्ज्यायौर्म्याय सौम्याय शम्याय शिवाय नमो नमः । पाराय सुपाराय महापाराय पारदाय पारविन्दाय नमो नमः । पुरुषाय सुपुरुषाय महापुरुषाय मध्यमपुरुषायोत्तमपुरुषाय ब्रह्मचारिणे नमो नमः । इति । एतदेवादित्योपस्थानम् । एता एवाज्याहुतयः । द्वादशरात्रस्यान्ते स्थालीपाकं श्रपयित्वै-**

---

1. P. शुचित्वे कृच्छ्रत्वं कामयमानस्य for शुचित्वादेः...
4. Bl. (उ)त्थानं for (उ)त्थाने.
5. RAl. नियमरुक्तोथव्रता (Al. निव्रता)न्याह for नियमम्...
19. PB. om. एवं; My. adds चारु before स्थाली०

ताभ्यो देवताभ्यो जुहुयात् । अग्नये स्वाहा । सोमाय स्वाहा । अग्नीषोमाभ्यामिन्द्राग्निभ्यामिन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे प्रजापतयेऽग्नये स्विष्टकृत इति । अथो ब्राह्मणतर्पणम् ॥ २ ॥

सा - अथ कृच्छ्रादिकर्तुः सत्यं वदेदित्यारभ्य ब्राह्मणतर्पणमित्यन्तेन वाक्यजातेन व्रताङ्गभूतान् नियमविशेषानाह—सत्यमिति । व्रतकर्ता यदा वचनं ब्रूयात्तदा सत्यं यथार्थमेव ब्रूयात् । 'न व्रतकाले असत्यं वदेदित्यर्थः । "नानृतात् पातकं किंचित्"—इति स्मृतावनृतस्यातिनिन्दितत्वात् । अनार्यैः वेदशास्त्राधिकारिणो ब्राह्मणादित्रैवर्णिका आर्याः, तद्व्यतिरिक्ता अनार्याः शूद्रपतितादयः । तैः सह न संभाषेत सत्यमनृतं वा न किंचित् संभाषणं कुर्यात् । रौरवयौधाजये (SV. i. 6.1.3.1) एतन्नामनी "पुनानः सोम धारया (साम. i. 511) इत्यस्यामृच्युत्पन्ने द्वे सामनी नित्यम् अनुदिनं प्रयुञ्जीत । त्रिवारादन्यूनं यथा भवति तथा गायेदित्यर्थः । अनुसवनं सवने सवने प्रातरादिषु त्रिष्वपि सवनेष्वित्यर्थः । आपोहिष्ठीयाभिः आपोहिष्ठेतिशब्दयुक्ताभिस्तिसृभिः ऋग्भिः उदकोपस्पर्शनं जलावगाहनं स्नानं कुर्यादिति शेषः ॥

अथ उदकस्पर्शनानन्तरं वक्ष्यमाणैश्चतुर्भिर्मन्त्रैः उदकतर्पणम् उदकेन तर्पणं कुर्यात् ॥

तत्र प्रथममन्त्रमाह—नमोऽहमायेति । यद्यप्यत्र देवताविशेषः स्पष्टो न प्रतीयते, तथाप्येतदादीनां चतुर्णां मन्त्राणामेवोत्तरत्रादित्योपस्थाने

---

3. AB. अतो for अथो.

5. A. व्रताङ्गवर्गादि B. व्रताङ्गवागादि for व्रताङ्गभूतान् P. om. विशेषान्.

6. P. व्रतकाले नानृतं वदेत for न व्रत...

7. Bl. B. om. अति.

10. Bl. adds इति before एतन्नामनी.

11. P. adds ते after सामनी.

12. P. त्रिवारं गानं यथा, B. Bl. त्रिवारादवरं यथा for त्रिवाराद्..

13. Bl. P. om. अपि; B. ०ष्ठीयादिभिः for ०ष्ठीयाभिः.

14. Bl. B. ०ष्ठाशब्द० for ०ष्ठेतिशब्द०

19. AB. स्पष्टं for स्पष्टः.

अतिदिश्यमानत्वादेष्वप्यादित्याभिमानी परमेश्वरः प्रतिपाद्यत इति गम्यते । **अह्माय** अहमहंकारः तेन माति निर्माति कृत्स्नं जगदित्यहमः परमेश्वरः । अनुस्वाराभावश्छान्दसः । तस्मै नमः करोमीति शेषः । यद्वा "माङ्माने शब्दे च" । अहमिति मीयते शब्द्यते सर्वैर्मनुष्यैरित्यहमः परमेश्वरः । अहंशब्दवाच्य इत्यर्थः । सर्वे हि जनाः कस्त्वमिति पृष्टा अहमहमिति स्वात्मानं कथयन्ति । तादृशाय नमः । **मोह्माय** मोहो वैचित्र्यमज्ञानं तेन मातीति मोहमः तस्मै नम इति सर्वत्रानुषज्यते । **मंह्माय** मंहनीयं स्तुत्यं यथा भवति तथा कृत्स्नं निर्मातीति मंहमः । अथवा मंहतिर्दानकर्मा । स्वभक्तेभ्यो दानं माति ददातीति मंहमस्तस्मै नमः । **धून्वते** स्वभक्तानां पापं विधून्वन् परिहर्ता परमेश्वरः । तस्मै नमः । **तापसाय** तपस्विवेषधराय नमः । तपस्विने इत्यर्थः । यद्वा, तप एव तापसं तपोरूपाय नम इत्यर्थः । **पुनर्वसवे** पुनर्वासयति स्वरश्मिभिः कृत्स्नं जगदिति पुनर्वसुः सूर्यात्मा परमेश्वरः । तस्मै नमः ॥

अथ द्वितीयं मन्त्रमाह—मौञ्ज्यायेति । **मौञ्ज्याय** मुञ्जविकारो मौञ्जस्तदर्हाय नमः । **और्म्याय** ऊर्मिरुदकं तदर्हाय नमः । स्नानार्थं जलावगाहिन इत्यर्थः । सौम्याय रमणीयाय नमः । **शम्याय** शमीति कर्मनाम । तदर्हाय नमः । सृष्ट्यादिव्यापारयोग्यायेत्यर्थः । **शिवाय** मङ्गलस्वरूपाय परमेश्वराय नमः ॥

---

2. AB. तत् Bl. तम् for तेन ; A. अहः for अहमः.

4. P. अहमिति यः शब्द्यते for अहमिति मीयते शब्द्यते ; Bl. अहम् for अहमः.

5. AB. पृष्ट्वा for पृष्टाः.

6. Bl. तम् for तेन; B. मोहः for मोहमः.

8. A. कृच्छ्रं for कृत्स्नं.

9. Bl. om. ददातीति मंहमः.

10. A. तापस for तपस्वि ; Bl. om. तपस्विने.

14. P. उदकं स्नानार्थं जलावगाहनमित्यर्थः, तदर्हाय नमः । for उदकं...। स्नानार्थं...इत्यर्थः.

16. P, ०रूपिणे, A, ०रूपाय for ०स्वरूपाय,

अथ तृतीयमन्त्रमाह—**पारायेति** । **पाराय** कर्मणां समापकाय नमः । **सुपाराय** सुष्टुकर्मसमापकाय नमः । तथा **महापाराय** अत्यन्तमाधिक्येन कर्मसमापकाय नमः । सुमहच्छब्दयोः कर्मसमाप्तितारतम्यभेदेन भेदोऽवगन्तव्यः । यद्वा, पारमिति परं तीरमुच्यते । संसाराब्धेः पारभूताय प्रपञ्चातीतस्वरूपायेत्यर्थः । अस्मिन्नप्यर्थे पारतारतम्यभेदेन सुमहच्छब्दयोः भेदो द्रष्टव्यः । **पारदाय** उक्तः पारशब्दार्थः । तस्य दात्रे नमः । **पारविन्दाय** तथाविधपारं लब्धवते नमः ॥

अथ चतुर्थमन्त्रमाह—**पुरुषायेति** । **पुरुषाय** पुरि हृदयपुण्डरीके शेत इति वा पूर्णत्वाद्वा पुरुषः परमेश्वरः । तस्मै नमः । **सुपुरुषाय** शोभनपुरुषाय नमः । **महापुरुषाय** महांश्चासौ पुरुषो महापुरुषः । तस्मै नमः । स्तुत्यैः गुणैः प्रवृद्धायेत्यर्थः । **मध्यमपुरुषाय** नमः । पुरुषस्त्रिविधः—अवरमध्यमोत्तमभेदेन । अवरो मनुष्यादिः । मध्यमो देवादिः । उत्तमस्तत्कारणभूतः परमेश्वरः । तत्र पुरुष इत्यनेन मनुष्यादिरूपः । तस्मै नमः । **उत्तमपुरुषाय** उक्तयोः कारणभूताय परमात्मने नमः । यद्वा, विराड्-

---

1. P. adds इति after नमः.

3. A. adds सकल० before first कर्म०; Bl. om. सुमहच्छब्दयोः... पारतारतम्यभेदेन; AB. om. second कर्म; Bl. द्रष्टव्यः for (अ)वगन्तव्यः.

4. Bl. om. यद्वा,...सुमहच्छब्दयोः भेदो द्रष्टव्यः; P. पर० for परं;

5. P. स्वप्रतिष्ठितरूपाय for स्वरूपाय.

6. P. उक्तपारशब्दार्थाय नमः ।, B. उक्तपारशब्दार्थदाय नमः for उक्तः ...दात्रे नमः ।

7. P. ०विधस्य पारस्य लब्धवते, A. ०विधाय पारस्य लब्धये for विधपारं..

8. A. पुरा for पुरि.

10. AB. om. first नमः., AB. adds च after पुरुषः and om महापुरुषः.

11. Bl. प्रवृद्धो य इत्यर्थः for प्रवृद्धाय ; B. om. नमः.

12. P. उत्तर for उत्तम.

13. P. मानुष for मनुष्य.

14. Bl, B. उत्तमाय for उक्तयोः.

हिरण्यगर्भ-परमात्मभेदेन पुरुषस्यावरमध्यमोत्तमत्वमवगन्तव्यम् । **ब्रह्मचारिणे नम** इति । ब्रह्म वेदः तत्र चरति गच्छतीति ब्रह्मचारी । तस्मै नमः । वेदाधिगम्यायेत्यर्थः । "तं त्वौपनिषदं पुरुषं पृच्छामि" (श. ब्रा. 14. 5. 9. 28) इति श्रुतेः । भक्त्यतिशयद्योतनार्थः पुनर्नमःशब्दः । इतिशब्दो मन्त्रचतुष्टयसमाप्तिद्योतनार्थः । तदेवं मन्त्रचतुष्टयेन सूर्याभिमानी परमेश्वरः प्रतिपादितः ॥

उक्तमन्त्रचतुष्टयमादित्योपस्थानाज्यहोमयोरप्यतिदिशति—एतदेवेति । उपस्थानशब्दस्य नपुंसकलिङ्गत्वापेक्षया **एतत्** इति नपुंसकलिङ्गत्वम् । आहुतिशब्दस्य स्त्रीलिङ्गत्वात्तदपेक्षया **एता** इति स्त्रीलिङ्गत्वम् । **एतद्** उक्तं मन्त्रचतुष्टयसाधनम् **एव आदित्योपस्थानं** व्रताङ्गं सूर्योपस्थानम् । कार्यमिति शेषः । **एताः** उक्तमन्त्रसाधनाश्चतस्र **आज्याहुतयः** । कार्या इति शेषः ॥

**द्वादशेति** । **द्वादशरात्रस्य** द्वादशरात्रसाध्यस्य कृच्छ्रस्य **अन्ते** अवसाने **स्थालीपाकं** स्थाल्यां पच्यत इति स्थालीपाकश्चरुः तं **श्रपयित्वा** पक्त्व **एताभ्यो देवताभ्यः** वक्ष्यमाणदेवताभ्यो **जुहुयात्** होमं कुर्यात् । एताभ्य इत्युक्ता देवता अभिधत्ते—**अग्नये स्वाहा** इति । प्रथमद्वितीयमन्त्रगतस्वाहाशब्दः उत्तरत्र सर्वत्रानुषज्यते । **स्वाहा** एवंभूताभ्यो देवताभ्यः सुष्टु हुतमस्तु । इतिशब्दो मन्त्रसमाप्त्यर्थः ॥

---

2. P. नमः । सर्ववेदव्रतं चरतीति गच्छतीति ब्रह्मचारी for नमः इति....
4. P. Bl. इत्यादिश्रुतेः for इति श्रुतेः.
5. P. चतुर्भिर्मन्त्रैः for मन्त्र....
7. B. om. आज्य.
8. P. ०लिङ्गत्वात्तदपेक्षया for लिङ्गत्वा...
9. P. आज्याहुति० for आहुति० ; P. उक्त for उक्तं.
10. P. व्रताङ्ग for व्रताङ्गं.
11. P. om. इति शेषः.
12. P. om. द्वादशरात्रसाध्यस्य ; AB. Bl. om. द्वादशरात्रस्य.
13. P. adds होमार्थं before पक्त्वा.
14. P. देवतार्थं for देवताभ्यः.
15. P. देवताः समन्त्रका अभिहिताः—'अग्नये स्वाहा, सोमाय स्वाहा'—इत्यादयः for देवता अभिधत्ते...इति ; P. मन्त्रकृतः for मन्त्रगत.
16. P. आहुतम् for हुतम.

अथो इति । अथोशब्द आनन्तर्ये वर्तते । कस्मादनन्तरम् । उक्तहोमादनन्तरं ब्राह्मणतर्पणम् अन्नसुवर्णादिकेन ब्राह्मणानां प्रीणनं कुर्यादिति शेषः ॥ २ ॥

भ - सत्यं वदेदित्यादिब्राह्मणतर्पणमित्यन्तं साधारणम् । अनार्यैः त्रैवर्णिकव्यतिरिक्तैर्न संभाषेत । एतच्च पतितादीनामप्युपलक्षणम् । रौरवयौधाजये नित्यमन्वहं प्रयुञ्जीत । अनुसवनं सवने सवने प्रातर्मध्यंदिनापराह्णेषु उदकोपस्पर्शनं स्नानकार्यम् आपो हि ष्ठेति शब्दवतीभिस्त्रिभिः ॥

अथ उदकस्पर्शादनन्तरमुदकेन तर्पणं कार्यं नमोऽहमायेत्यादिभिश्चतुर्भिर्मन्त्रैरुभयतो नमस्कारैः । उक्तोऽस्य मन्त्रस्यान्ते द्विर्नमस्कारः । एतदेव एतन्मन्त्रसाधनमेव आदित्योपस्थानं कर्माङ्गम् । तेन नित्यस्योपस्थानस्याव्यावृत्तिः । एतावन्मन्त्रसाधना आज्याहुतयः चतस्रः कार्याः । शिष्टं सुज्ञातमेवेति ॥ २ ॥

## 8. एतेनैवातिकृच्छ्रो व्याख्यातः ।

सा - कृच्छ्रस्वरूपं विधाय तदेवातिकृच्छ्रेऽप्यतिदिशति—एतनेति । "हविष्यान् प्रातराशान् भुक्त्वा" इत्यादि "ब्राह्मणतर्पणम्" इत्यन्तेन वाक्यजातेन यत् कृच्छ्रस्वरूपमुक्तम्, एतेनैव एतादृशेनैव कृच्छ्रस्वरूपेण अतिकृच्छ्रः उक्तलक्षणं कृच्छ्रमतीत्य वर्तमानस्तपोविशेषोऽतिकृच्छ्रः, स च व्याख्यातः विशेषेण कथितः ॥

भ - अथ द्वितीयस्य कृच्छ्रस्यातिकृच्छ्रयज्ञकृच्छ्रधर्मानतिदिशति— एतेनेति ।

## 9. यावत् सकृदाददीत तावदश्नीयात् ॥ ३ ॥

---

1. AB. Bl. अत्रातः for अथो ; P. adds अथो तस्मात् for कस्मात्.
2. AB. स्वर्ण for सुवर्ण ; Bl. प्रणामं for प्रीणनं.
9. AlR. उक्तम् for उक्तः.
10. AlR. (उ)पाख्यानं for (उ)पस्थानं.
14. AB. Bl तमेव for तदेव.
15. Bl. (अ)नेन for (अ)न्तेन.
16. Bl. om. वाक्यजातेन. P. एतादृक्कृच्छ्रस्वरूपेणैव for एता०
17. P, ०लक्षणकृच्छ्रम् for ०लक्षणं कृच्छ्रं.

सा - तत्र विशेषमाह—यावदिति । प्रथमे त्र्यहे दिवैवाश्नीयात्, द्वितीये नक्तमेव, तृतीये त्वयाचितमिति पूर्वत्रोक्तम् । अत्र तु तेषु कालेषु यावत्प्रमाणमशनीयं सकृत् एकवारम् आददीत स्वीकुर्यात्, दक्षिणेन पाणिनेति शेषः । तावत्प्रमाणमेव अश्नीयात् । न पुनर्ग्रासनियमोऽयम् । सकृदात्तं यावद्भ्यो ग्रासेभ्यः पार्याप्तं तावतो ग्रासान् ग्रसेत् । शेषान् व्रतनियमान् पूर्ववदाचरेदित्यर्थः ॥ ३ ॥

भ - अयं तु विशेष इत्याह—यावदिति । प्रथमे त्र्यहे दिवैवाश्नीयात्, द्वितीये नक्तमेव, तृतीयेऽयाचितमित्युक्तं [तत्] पूर्ववत् । अत्र तेषु कालेषु यावत्प्रमाणमशनीयं दक्षिणेन पाणिना सकृदाददीत तावदेवाश्नीयात् । तेन[न]पुनर्ग्रासनियमोऽयम् । सकृदात्तं यावद्भ्यो ग्रासेभ्यः पर्याप्तं तावतो ग्रासान् ग्रसेदिति ॥ ३ ॥

## 10. अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः ॥ ४ ॥

सा - अथ कृच्छ्रातिकृच्छ्रस्य विशेषमाह—अब्भक्ष इति । अब्भक्षः आप एव भक्षो यस्य स तथोक्तः तृतीयः । कृच्छ्रादीनां त्रयाणां योऽन्त्यस्त्रित्वसंख्यापूरकः, सः तादृशः कृच्छ्रातिकृच्छ्रः । कृच्छ्रातिकृच्छ्रावलम्ब्य

---

1. P. adds अथ before प्रथमे० *see CN*.

2. B. द्वितीयत्र्यहे for द्वितीये ; B. om. first तु; P. पुर्वोक्तम् for पूर्वत्रोक्तम्.

3. BBl. add यत् after यावत्.

4. Bl. om. एव ; Bl. AB. om. अयम् ; A. adds यावत् before सकृत्.

5. P. adds इत्यर्थः after ग्रसेत्.

6. PBl. om. इत्यर्थः.

9. R. deletes from अत्र तेषु...
up to कृच्छ्रवदेवैतं तृतीयं चरेद् of the next paragraph.

10. Al. सकृदादीतं for सकृदात्तं.

12. SS. तृतीयं for तृतीयः *see.* CN.

13. P. Bl. कृच्छ्रविशेषम् for ०कृच्छ्रस्य...

14. BBl. om. कृच्छ्रादीनां...योन्त्यः.

15. P. कृच्छ्रमवलम्ब्यावस्थितत्वात् for कृच्छ्रातिकृच्छ्रम० Bl. आलम्ब्य. for अवलम्ब्य.

स्थितत्वादेतन्नामको भवेत् । अस्मिन् कृच्छ्रातिकृच्छ्रे एतावांस्तु विशेषः-- पूर्वोक्तप्रातरादिकालेष्वाप एव भक्षाः स्युरिति । तावद्व्रतनियमं कृच्छ्रवदाचरेदित्यर्थः ॥ ४ ॥

भ - अथ कृच्छ्रातिकृच्छ्रस्याह—अब्भक्ष इति । उक्तेषु प्रातरादिकालेषु **अब्भक्षो** भवेत् अप एव भक्षयेत् कृच्छ्रवदेवैतं **तृतीयं चरेदिति** वाक्यशेषः । स पूर्वोक्तानां त्रयाणां कृच्छ्रातिकृच्छ्रो नामेति । अथवा **अब्भक्षः** इति कृच्छ्रविशेषणम् । अस्मिन्नाप एवोक्तकालेषु भक्षाः स्युरिति ॥ ४ ॥

**11. प्रथमं चरित्वा शुचिः पूतः कर्मण्यो भवति । द्वितीयं चरित्वा यत्किंचिदन्यन्महापातकेभ्यः पापं कुरुते तस्मात् प्रमुच्यते । तृतीयं चरित्वा सर्वस्मादेनसो मुच्यते ॥ ५ ॥**

सा - अथैतेषां त्रयाणां प्रत्येकं फलविशेषमाह--**प्रथममिति** । **प्रथमं** पूर्वोक्तानां त्रयाणां मध्ये आदिमं कृच्छ्राख्यं तपोविशेषं **चरित्वा शुचिः** पापेभ्यः शुद्धः । अत एव पूतः पावमानीकर्मार्हः । पावमानीं प्राप्तः सन् **कर्मण्यः** यज्ञादिकर्मयोग्यो **भवति** । तथा **द्वितीयं** तेषां मध्ये द्वित्वसंख्यापूरकमतिकृच्छ्राख्यं तपोविशेषं **चरित्वा महापातकेभ्योऽन्यद्** अनिरुक्तं **यत्किंचित्**

---

1. Bl. तावांस्तु for एतावांस्तु.

2. P. भक्ष्याः for भक्षाः ; P. इतरद् for तावद्.

5. A. ०एतानि for एतं.; R. om. from अत्र तेषु of the Previous paragraph up to कृच्छवदेवैतं तृतीयं चरेत्.

6. RAl. कृच्छ्रोऽ० for कृच्छ्रा.

12. P. अथ तेषां for अथैतेषां.

A. does not have commentary on this and the next concluding paragraphs. B. ends this खण्ड with this paragraph and repeats the last word मुच्यते twice assuring us the खण्ड concludes with this paragraph. This also does not have commantary on this.

14. Bl. om. सन्.

16. Bl. adds वा after अन्यद्.

पापं कुरुते तस्मात् उपपातकपर्यन्तात् पापात् प्रमुच्यते प्रकर्षेण मुच्यते । तथा तृतीयम् उक्तानां मध्ये त्रित्वसंख्यापूरकं कृच्छ्रातिकृच्छ्राद्यं चरित्वा सर्वस्मात् महापातकसहिताद् अशेषाद् एनसः पापात् मुच्यते ॥ ५ ॥

भ - अथैतेषां त्रयाणामेकैकस्य समस्तानां च फलविशेषमाह— प्रथमं चरित्वेत्यादिनानुवाकशेषेण । विधिक्रमापेक्षमेतेषां प्रथमं[चरि]त्वेति । अर्थश्च निगदसिद्धः । तदनु द्वितीयेनोपपातकपर्यन्तानि पातकानि पश्यति । तृतीयेन महापातकान्यपि इत्युक्तम् । इदमर्थवादमात्रमुत फलकथनम ? फलकथनमेव । फलान्तराश्रवणात् । अश्रुतेऽपि फले विश्वजिदादिषु [यथा] फलं स्वर्गादि, तद्व[दि]ह कल्प्यते फलम् ? । नैवम । अर्थानुपपत्त्य हि फलं कल्प्यते । आर्थवादिकफले[षु] श्रूयमाणेषु विपरिवर्तमानफलान्तरकल्पनायां प्रमाणाभावात् । यथा रात्रिपक्षेषु श्रूयमाणत्वादार्थवादिकप्रतिष्ठादि फलत्वेन निर्णीतं तद्वदिह स्यात् । यद्येवं महापातकेषु द्वादशवर्षकृच्छ्रादिविधानमनर्थकं स्यात् । तस्मादस्य रहस्यं प्रमादादिकृतेऽप्येतदेव प्रायश्चित्तमिति द्रष्टव्यम् ॥ ५ ॥

12. अथैताꣳस्त्रीन् कृच्छ्राꣳश्चरित्वा सर्वेषु वेदेषु स्नातो भवति । सर्वेषु देवेषु ज्ञातो भवति । यश्चैवं वेद यश्चैवं वेद ॥ ६ ॥ ॥ २ ॥

---

1. Bl. om. पापात् प्रमुच्यते.

7. RAl. पश्यन्ति for पश्यति.

9. RA'. कल्पते for कल्प्यते; RAl. अर्थानुपपद्यादि for अर्था०

10. RAl. कल्पते for कल्प्यते; RAl. आर्थवादिक (के AL) फला. (ले R) श्रयमाणेषु द्वौ विपरिवर्तमान (ने AL) फलान्तकल्पनायां for आर्थ०...

11. RAl. सूयमान (स्नपमाण) त्वाद् for श्रूयमणत्वाद् ०

12. RAl. द्वादशवर्षकादि for द्वा० . . .

16. My TA सर्वैर्देवैः for सर्वेषु देवेषु.

सा - अथ वेदितुः फलमाह--सर्वेष्विति । उक्तानुष्ठानापेक्षः चशब्दः । यः पुमान् एवम् उक्तप्रकारेण कृच्छ्रादिकं वेद सम्यग्जानाति, "वेदमधीत्य स्नायात्"—इत्यादीनि यानि स्नानादिव्रताङ्गभूतानि वेदेषु सन्ति तैः सर्वैः एवंवित् स्नातो भवति इत्यर्थः । किंच सर्वेषु देवेषु इन्द्रादिषु ज्ञातो भवति । सर्वे देवा एतत्तपःकर्ता महानित्यवगच्छन्तीत्यर्थः ॥ ६ ॥

द्विरुक्तिः खण्डसमाप्तिद्योतनार्था ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये द्वितीयः खण्डः ॥ २ ॥

॥ इति द्वितीयः खण्डः ॥

---

1. A. after सर्वेष्विति reads. स्पष्टोऽर्थः । समुच्चयफलमप्युक्त्वा वेदनं फलमाह—यश्चैवं वेद यश्चैवं वेद इति । द्विरुक्तिरनुवाकसमाप्त्यर्था ॥ द्वितीयः खण्डः ॥ and concludes the chapter.

3. Bl. स्नानानि. for स्नानादि.

4. Bl. सम्मतैः for सन्ति तैः; Bl. om, ०वित् from एवंवित्.

6. Bl. ०द्योतनार्थं for ०द्योतनार्था.

# तृतीयः खण्डः

## 1. अथातः स्वाध्यायाध्ययनस्य ॥ १ ॥

सा - द्वितीयखण्डे तपःस्वरूपं विधाय, तृतीये स्वाध्यायाध्ययनं विधातुमादौ प्रतिजानीते—अथात इति । अथ तपोव्याख्यानानन्तरं, यतः स्वाध्यायाध्ययनप्रभावेन स्वर्गप्राप्तिः, अतः कृत्स्नस्य स्वाध्यायाध्ययनस्य साधारणान् धर्मान् व्याख्यास्याम इति शेषः ॥ १ ॥

भ - तपोव्याख्यानतोऽनन्तरं स्वाध्यायाध्ययनस्य साधारणान् धर्मान् [व्या] ख्या[स्या]म इत्यनुषङ्ग इति ॥

## 2. काममुक्त्वोपक्रामेदन्ते वा । त्रीन् कृच्छ्रांश्चरित्वा पूतो भवति । अग्निं प्रतिष्ठाप्याग्न्यभावे तूदकमादित्यं वोपसमाधाय दर्भानुपस्तीर्य दर्भेष्वासीनः प्राक्कूलेषूदक्कूलेषु वा दक्षिणेन पाणिना दर्भमुष्टिं गृहीत्वा ॥

---

A. & B. do not stop at अथातः स्वाध्यायाध्ययनस्य but continue further and end the paragraph after पूतो भवति. In A the commentary of this portion runs:—अथ कृच्छ्रानुष्ठानानन्तरं अ[तो]हेतोः स्वाध्यायाध्ययनं कर्तुमिच्छन् पुरुष आदावन्ते वा त्रीन् कृच्छ्रान् चरित्वा 'कामं' यथेच्छमुक्त्वा स्वयमधिकृत्य अनन्तरं वक्तुमुपक्रमेदित्यर्थः ।.

In B. अथ कृच्छ्राचरणानन्तरं अतः यतः स्वाध्यायाध्ययने पूतत्वेनाधिकारः [अतः स्वाध्या]यो वेदः स्वा[ध्यायस्या]ध्ययनमभ्यासं (?सः) वक्ष्यमाणनियमपुरःसरं तस्य कामः (०मं Bl) काम्यत इति फलं तमुक्त्वा संकल्प्य (०ल्पं Bl.) एतत्फलकामः एतदध्ययनं करिष्य इति त्रीनपि कृच्छ्रांश्चरित्वा पूतो भवतीति उपक्रामेत् आरभेत । यद्वा, कामानुसारेणाध्ययनं कृत्वा तदन्ते । कृच्छ्रनियममाह—अग्निं प्रतिष्ठाप्येति ।; Bl. closely follows B. with minor corrections.

3. Bl. विधेयं for विधातुम्.

10. M. दर्भान् प्रस्तीर्य for दर्भानुप० B. om. दर्भानुपस्तीर्य ; My प्राक्तलेषूदक्तलेषु० for प्राक्कूलेषु०.

सा - अथ वक्ष्यमाणानां साधारणधर्ममाह—काममिति । उपक्रमात् पूर्वं कामं कमनीयं फलं मेऽस्त्वित्युक्त्वा स्वाध्यायम् उपक्रामेत् । अन्ते स्वाध्यायाध्ययनस्य समाप्तौ वा कामं वदेत् । त्रीनिति । स्वाध्यायोपक्रमात् पूर्वं त्रीन् कृच्छ्रान् पुर्वोक्तान् त्रिविधान् कृच्छ्रसंज्ञकान् तपोविशेषान् चरित्वा पूतः स्वाध्यायाध्ययनार्हो भवति । अग्निमिति । कृच्छ्रानुष्ठानानन्तरं स्वाध्यायाध्ययनं कर्तुमिच्छन् पुरुषः अग्निं प्रतिष्ठाप्य अग्निस्थापनं कृत्वा, तत्समीपे उपविश्येत्यर्थः । अग्न्यभावे तूदकम् अग्निव्यतिरिक्ते प्रदेशे तु नदीपर्वतादिके उदकं वा आदित्यं वोपसमाधाय समीपे निधाय, तयोरन्यतरस्य समीपे उपविश्येत्यर्थः । दर्भान् कुशान् उपस्तीर्य भूमावास्तरणं कृत्वा एवं भूतेष्वास्तृतेषु दर्भेषु आसीनः प्राङ्मुख उपविष्टः स्वाध्यायमधीयीतेति शेषः । कीदृशेषु दर्भेषु? प्राक्कूलेषूदक्कूलेषु वा प्रागग्रेषु उदगग्रेषु वा । किं कृत्वा? दक्षिणेन हस्तेन दर्भमुष्टिं मुष्टिपूरितदर्भान् गृहीत्व वक्ष्यमाणानि सामान्यधीयीतेति शेषः ॥

भ - अथ विवक्षितान् साधारणान् धर्मानाह—काममुक्त्वोपक्रामेदित्यादिना दक्षिणेन पाणिना दर्भमुष्टिं गृहीत्वेत्यन्तेन । उपक्रमात् पूर्वं कामं कमनीयं फलमुक्त्वा आदौ "मे फलं भूयाद्" इत्युक्त्वा स्वाध्यायम् उपक्रामेत् । अन्ते समाप्तौ वा स्वाध्यायाध्ययनस्य कामं ब्रूयात् । उपक्रमात् पूर्वं त्रीन् कृच्छ्रान् पूर्वोक्तांश्चरित्वा पूतः स्वाध्यायाध्ययनयोग्यो भवति । कृच्छ्रान्तेऽध्ययनं चिकीर्षन् अग्निं प्रतिष्ठाप्य अधीयीत । अग्न्यभावे तूदक[म]ाशयस्थम् आदित्यं वा उपसामाधाय समीपे निधाय

---

5. A. om. कृच्छ्रानुष्ठानानन्तरं...पुरुषः.

6. Bl. om. (अ)ध्ययनं.

7. P. Bl. om. (उ)दकं; AB. Bl. ०रिक्तप्रदेशे for ०रिक्ते...

8. P. om. first वा.

9. Before दर्भान् A adds अग्न्यभावे तूदकमिति विकल्पात्; AB. कुशमयान् for कुशान्.

10. AB. Bl. प्राङ्मुखोपविष्टः for प्राङ्मुखः....

12. A. om. मुष्टिपूरितदर्भान्. B. adds गृहीत्वा before मुष्टिपूरितदर्भान too.

18. RAl. त्रीणि for त्रीन्

19. RAl. उच्छान्ते for कृच्छान्ते

तयोरन्यतरस्य समीप उपविश्येत्यर्थः । दर्भान् भूमावुपस्तीर्य तेषूपस्तीर्णेषु प्राक्कूलेषु उदक्कूलेषु वासीनः प्राङ्मुखो दक्षिणेन पाणिना दर्भमुष्टिं गृहीत्वा अधीयीतेति शेषः ॥

## 3. प्रथमं त्रिवर्गं नवकृत्वो नवकृत्वो गायेत् ॥

## 4 एवं सदा प्रयुञ्जानोऽग्न्याधेयमवाप्नोति ॥ २ ॥

सा - अथाध्ययनप्रकारमाह—प्रथमं त्रिवर्गमिति । प्रथमं प्रथमायां "अग्न आयाहि वीतये" (साम. I. 1.) इत्यस्यामृच्युत्पन्नं त्रिवर्गं वर्गाः सामानि, सामत्रयं नवकृत्वो नवकृत्वः वीप्सा सर्वार्था । त्रीण्यपि सामानि प्रत्येकं नववारावृत्त्या गायेत् ॥

अथ प्रयोगेण प्राप्तव्यं फलमाह—एवमिति । एवम् उक्तनियमपूर्वकं प्रथमं त्रिवर्गमित्याद्युक्तप्रकारेण सदा सर्वदा विशेषाश्रवणान्नित्यानुष्ठानव्यतिरिक्ते काले एकस्मिन्नेवाहनि सततं प्रयुञ्जानः अग्न्याधेयं सप्तपार्थिवादिसंभारानारोप्याग्निं मथित्वा त्रिष्वपि स्थानेषु अग्निस्थापनं, तद् अवाप्नोति । तेन यत् फलं तत् प्राप्नोतीत्यर्थः ॥

नन्वग्न्याधानस्य सर्वक्रत्वर्थत्वान्न पृथक् फलमस्ति । अतः कथं तदवाप्तिरूपफलाभिधानम्? इति न ।

"या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः" [रामा-अर.68.29] इत्यादिना यज्ञव्यतिरेकेणैव फलश्रवणात् । एवमुत्तरत्र पवमानाग्निहोत्राद्यवाप्तिवचनेष्वप्यवाप्तव्यं

---

1. R. ०स्तीर्यात्तेषुपस्तणेषु, Al. ०स्तीर्यास्तेषुपस्तीर्णेषु for ०स्तीर्य . . .
5. My. आप्नोति for अवाप्नोति
6. AB. Bl. om. अथ
8. P. सर्वाण्यपि for त्रीण्यपि.
11. P. om. आदि ; AB. ०रिक्तकाले for ०रिक्ते . . .
13. After अग्निस्थापनं A. Bl. add अग्न्याधानं
14. A. तदवाप्नोतीति for तत्प्राप्नोतीत्यर्थः.
15. Bl. om. ननु.
16. After न P. adds वक्तव्यम्
18. AB. Bl. om. अपि

तत्तत् फलमिति मन्तव्यम् । अथवा आधानादीन्येवाप्नोति । तदवाप्तौ तत्फलस्यावश्यकत्वाद् ; वैतानिकानामग्निहोत्रादिकर्मणामाधानपूर्वकत्वात् प्रथमं तदवाप्तेरभिधानम् ॥ २ ॥

**भ** - इति अग्न्याधेयं प्र[ा]कृतिकद्वैत[क]ाग्निनी (ग्नीनां ?) कर्मणां प्राप्यमग्न्याधेयफलकामस्याह — **प्रथममिति** । **प्रथमं त्रिवर्गम्** "अग्न आयाहि वीतये" इत्यस्यां प्रथमायामधीतानि त्रीणि सामानीत्यर्थः । एकैकं साम **नवकृत्वो गायेत्** ॥

**सदा** संततमित्यर्थः । विशेषादर्शनादेकमहोरात्रं नित्यकर्माविरोधेन- सततं प्रयुञ्जानोऽग्न्याधेयमाग्नेयाष्टाकपालयामपर्यन्तमवाप्नोति ।

"या गतिर्यज्ञशीलानामाहिताग्नेश्च या गति." [रामा.अर 68.29] इति पृथक्प्रसाधकत्वस्याग्न्याधेयस्यावगतत्वात् । अग्न्याधेयस्य च संस्कारेषु चत्वारिंशत्सु परिगणितत्वात् । अत्र च संख्याविशेषस्याश्रवणादेकमेवाहोरात्रं जपः कार्यः ॥ २ ॥

## 5. इन्द्राय पवते मद इति पवमानहवींष्येतेन कल्पेन ॥ ३ ॥

**सा** - अथ पवमानेष्टिफलसाधनोपमाध्ययनप्रयोगमाह—**इन्द्रायेति** । एतेन "अग्निं प्रतिष्ठाप्य" इत्यारभ्य "दर्भमुष्टिं गृहीत्वा" इत्यन्तेन कल्पेन इन्द्राय पवते मद (I. 520) इति अस्यामुत्पन्नं साम प्रयुञ्ज्यात् । पवमान- हवींषि । 'यदग्नये पवमानाय' 'यदग्नये पावकाय' 'यदग्नये शुचये' इति

1. After फलं P. adds अस्ति ; P. तत्प्राप्तौ for तदवाप्तौ.
3. AB. Bl. अवाप्त्यभिधानम् for अवाप्तेः . . .
8. RAl. विशेषो॰ for विशेषा॰
9. RAl. आग्नेयोऽ॰ for आग्नेया॰
14. My. पावमान॰ for पवमान॰
16. P. पवमानेष्टिप्रतिनिधिरूपमध्ययनप्रयोगम्, A. पवमानेष्टिसाधन- प्रतीति—पमाध्ययनप्रयोगम् for पवमानेष्टि॰
17. P. अग्निं प्रतिष्ठाप्य दर्भमुष्टिं गृहीत्वा इत्येतेन for "अग्निं...
18. A. उत्पन्नानि सामानि त्रीणि प्रयुञ्ज्यात्, PBl. उत्पन्नं . . . प्रयुञ्जन् for उत्पन्नं साम प्रयुञ्ज्यात्

विहितास्तिस्र इष्टयः पवमानहवींषीत्युच्यन्ते । आधानाधिकृतस्यैवैषु हविःष्वधिकारात् तत्प्रयोगानन्तरमपरस्मिन्नहनि एतत्कार्यमिति ज्ञायते ॥

न चाधानपवमानेष्ट्योरग्नेर्यागयोग्यतोत्पादनारूपत्वकार्यैकत्वात् पृथक्-पवमानहविरवाप्तिवचनं न युक्तमिति वाच्यम् । आधानवत् पृथगेवाग्नि-संस्कारकत्वात् ॥ ३ ॥

भ - **एतेन** पूर्वोक्तेन **कल्पेन** 'अग्निं प्रतिष्ठाप्य' इत्यादिना 'दर्भमुष्टिं गृहीत्वा' इत्यन्तेनोक्तेन कल्पेन एव तत्साम एकरात्रं सदा प्रयुञ्जीत । **पनमानहवींषि** आप्नोति । आहिताग्नेरधिकृतत्वात् पवमानहविषि प्रथमस्य त्रिवर्गस्याग्न्याधेयप्रासाधस्य प्रयोगादूर्ध्वं कस्मिंश्चिदहनि एतत्कार्यमिति ज्ञायते । तस्य चाग्न्याधेयस्य पवमानहविषां च साम्नामाहवनीयादिसिद्ध्यर्थत्वेन प्रसिद्धेः । किमिदं वृथा कीर्तनं चेत्, [न] । अग्न्याधेयस्य पवमानहविषाति-रिक्तस्यापि आहवनीयादिसाधनत्वेन श्रूयमाणत्वात्, कात्यायना[दि]-भिरुक्तत्वादिति ॥

## 6. सुवर्महाः सुवर्मया इत्येताभ्यां दर्शपूर्णमासावेतेनैव कल्पेन ॥ ४ ॥

सा - अथ दर्शपूर्णमाससाधनमध्ययनप्रयोगमाह — **सुवर्महा** इति । उक्ताभ्यां सामभ्यामेतेनैव उक्तेनैव **कल्पेन** अधीयानः पुरुषो **दर्शपूर्णमासौ** अवाप्नोति । अत्रोक्ते सामनी उपरिष्टाद्वक्ष्यमाणाग्निहोत्रावाप्तिप्रयोगे विहिताभ्यां

---

1. P. अथ कृताधानस्यैतेषु हविःषु for आधान॰
2. A. परास्मन् for अपरस्मिन्
3. P. योग्यतोत्पादनानुरूपकार्यैकत्वात् पृथक् सवनं हविरवाप्तिवचनं· A. यागयोर्यज्ञोत्पादनरूपत्व॰ for यागयोग्यतोत्॰
8. RAl. हविंषी for हविषि.
9. Al. प्रासादस्य for प्रासाधस्य.
10. RAl. समुताम् for साम्नाम्
11. After प्रसिद्धेः RAl read:—किमिदं दय्यत्कीर्तनमेतत् । अग्न्याधेयस्य पवमानहविंषीतिरिक्तस्यापि आहवनीयादिसिद्धा (R द्धय)र्थत्वेन प्रसिद्धेः ।
14. T. ॰मास्यावेतेन कल्पेन for ॰मासा॰.
16. P. ॰मासार्थे च स्वाध्यायप्रयोगम् for ॰माससाधनम्...
18. BBl. add स्वर्महा स्वर्मया इति before अत्रोक्ते; P. सामानौ for सामनी; P. उपरि for उपरिष्टात् .

'यदिन्द्राहम् यथा त्वम्' (साम. i 122) इत्येताभ्यां सामभ्यां सह समुच्चीयेते। उभयावाप्तेर्विधास्यमानत्वात्। 'सुवर्महाः' इत्येतत् पूर्णमासे प्रयुञ्जीत, 'सुवर्मयाः' इत्येतद्दर्शे, इति तयोर्व्यवस्था ॥ ४ ॥

स - अथ दर्शपूर्णमासावाप्तिसाधनं स्वाध्यायाध्ययनमाह—सुवर्महा इति। ['सुवर्महा' 'सुवर्मया'] इत्येताभ्यां सामभ्यां पूर्वोक्तेनैव कल्पेन दर्शपूर्णमासाववाप्नोति। प्रथमं पूर्णमासकाले प्रयुञ्जीत; द्वितीयं दर्शकाल इति व्यवस्थेति ॥

**7. भृत्यातिथिशेषभोजी काले दारानुपेयाद्। यथाशक्ति चातिथिभ्यो दद्यादप्युदकमन्ततः। एवंव्रतो 'यदिन्द्राहं यथा त्वम्' इत्येते सदा प्रयुञ्जीत। सुवर्महाः सुवर्मया इत्येते च पर्वणि। तथा हास्याग्निहोत्रमविलुप्त३ँ सदा हुत३ँ सदर्शपूर्णमासं भवति ॥ ५ ॥**

सा - अथ यावज्जीवाधिकाराग्निहोत्रदर्शपूर्णमाससाधनमध्ययनप्रयोगमाह—भृत्येति। भृत्यशब्देनात्र भरणीया देवादय उच्यन्ते। अतिथयोऽनित्यं दूरादागताः।

"अनित्यमागतो यस्मादतिथिः स निगद्यते।" (म. स्मृ. iii. 102) इति स्मृतिः। तेभ्यो दत्त्वा तत्प्रदानशेषभोजनशीलः सर्वदा स्यात्। अनेन पञ्चमहायज्ञशीलो भवेदित्युक्तं भवति। तथा काले ऋतुकाले प्राप्ते दारान् भार्याम् उपेयात् गच्छेत्। नियमविधिरयम्। अतो न भार्याव्यतिरिक्तप्रदेशे।

---

1. P. om. यथा त्वम्
2. P. उभयावप्त्योः for उभया॰; P. पौर्ण for पूर्ण
3. P. adds तु after second इति
5. Ral. हाउत्वामिन्द्रा इत्येताभ्यां for सुवर्महा०ः...
10 & 11. My MTASB. स्वर्महा स्वर्मया for सुवर्महाः . . .
11. AP. पर्वणी for पर्वणि
13. P. ॰होत्रं दर्शपूर्णमासं च उभयप्रयोगम् for ॰होत्रदर्श....
18. ABBl. om भवति
19. P. उपगच्छेत् for गच्छेत्; Bl. A. om न; ABBl. ॰प्रदेशः for ॰प्रदेशे.

तस्यामपि काल एवेति नियम्यते । **यथाशक्ति चातिथिभ्यो दद्यात् ।** उक्तस्याप्यस्य पुनर्विधानमावश्यकत्वात् । अन्ततः सर्वाभावेऽन्नराहित्ये **उदकमपि** वा दद्यात् । कदाचिदपि न प्रत्याचक्षीतेत्यर्थः । **एवंव्रतः "यदिन्द्राहं यथा त्वम्"** (I. 122) इत्येते सामनी सदा अन्वहं प्रयुञ्जीत । तत्रापि नित्यकर्माविशिष्टे काले इत्युक्तम् । न केवलमेते एव सामनी, किंतु **"सुवर्महाः सुवर्मयाः" इत्येते च पर्वणि** । पर्वशब्दश्रवणेन उक्ते सामनी दर्शपूर्णमासकाले एव प्रयोक्तव्ये । न पूर्वसामवदन्वहमित्यर्थः । **तथा ह** । हेति चार्थे । तथा चानुष्ठिते सति **अस्य** अनुष्ठातुः **अग्निहोत्रम् अविलुप्तम्** लोपरहितम् । अत एव **सदा हुतं** सायंप्रातःकाले अनुष्ठितं भवति । न केवलमुक्तमेवाग्निहोत्रं, किंतु **सदर्शपूर्णमासं** दर्शपूर्णमासमग्निहोत्रं चोभयमपि सम्यगनुष्ठितं भवति ॥

अत्र यद्यपि कालेयत्ता न श्रूयते, तथापि भृत्यातिथिशेषभोजीत्यादिवाक्यपर्यालोचनायां सत्यां सर्वदा प्रयोक्तव्यमिति गम्यते । तथा **कर्मान्तेऽग्निं प्रतिष्ठाप्ये**त्यनेन व्रतसमाप्तेश्च कर्तव्यत्वादवसानं च गम्यते । एवं च श्रुत्यन्तरे "संवत्सरमेतद्व्रतं चरेत्" इति व्रतस्य संवत्सरेयत्तादर्शनादत्रापि तावत्कालमेतत्प्रयोक्तव्यमिति लभ्यते ॥ ५ ॥

---

1. Bl. B. भार्यायामकाले for तस्यामपि काले.
2. P. अत्यवश्यकत्वात् for आवश्यकत्वात्.
3. P. om. चिद्; A. ०व्रतः for व्रतः
5. ABBl. ०शिष्टकाले for ०शिष्टे . . .; P. केवले for केवलम्
6. P. ०श्रवणात् Bl. श्रवणे for श्रवणेन
9. A. om. ०काले
10. P. takes न after अग्निहोत्रं.
12. A. काले इयत्ता for कालेयत्ता.
13. B. om. सत्यां; P. adds अपि after कर्मान्ते
14. A. समाप्तिर्दर्शितः for समाप्तेश्च; AB. om. कर्तव्यत्वादवसानं च गम्यते ; P. सति for च; Bl. इत्यश्रुत्यन्तरे for एवं च श्रुत्यन्तरे.
15. AB Bl. तस्य for व्रतस्य.

भ - अथ यावज्जीवं हुतस्याग्निहोत्र[स्य प्रयोगमाह-] **भृत्यातिथिशेषभोजी** इत्यादिना **सदर्शपूर्णमासं भवति** इत्यन्तेन । अत्र भृत्यातिथिशेषभोजीत्यादीनां व्रतानां चिरकालानुष्ठेयत्वप्रतीतेः **कर्मान्तेऽग्निं प्रतिष्ठाप्ये** [त्ये]तेन समाप्तेश्च सूचितत्वात् कियन्तं कालमित्यपेक्षायां "संवत्सरं व्रतं चरेत् संवत्सरं हि व्रतं नातीयाद्" इति श्रुत्यन्तरात् संवत्सरं कार्यमिदमिति ज्ञायते ॥

**भृत्यातिथिशेषभोजी**ति । भृत्यशब्देन भरणीया देवादयश्च गृह्यन्ते । तेन पञ्चमहायज्ञकारिता चोक्ता भवति । **काले दारानुपेया**दिति । दारानेवोपेयात्, काले ऋतावेव तदिति । **यथाशक्ति चातिथिभ्यो दद्याद्प्युदकमन्तत** इति । वैश्वदेवकालादन्यदापि याचमानेभ्योऽतिथिभ्यो **यथाशक्ति दद्यात्** । सर्वथा तदशक्तौ **अप्यन्ततः उदकं** वा **दद्यात्** । अतिथीन्नैव प्रत्याचक्षीत । **एवंव्रतः सन् यदिन्द्राहं यथा त्वम् इत्येते** सामनी **सदाऽन्वहं प्रयुञ्जीत** । **सुवर्महाः सुवर्गया इत्येते पर्वणी**ति । **पर्वणि** दर्शपूर्णमासयोः । कार्यकार[ण]त्वादुभे(भौ ?)मासे(सौ ?)गृह्येते । न पर्वमात्रम् । पर्वमात्रस्य क्वचिदपि विधाना[भावा]त् । **तथा** कृते **अस्य** अध्येतुरग्निहोत्रमविलुप्तमविच्छेदेन कृतं **सदा** यावज्जीवं **हुतं सदर्शपूर्णमासं** भवति ॥

## 8. कर्मान्तेऽग्निं प्रतिष्ठाप्य व्रीहियवाꣳ꣱स्तण्डुलाꣳ꣱स्त्रिः प्रक्षाल्य जुहुयात् । अग्नये स्वाहा । सोमाय

---

2. R. ०पौर्णमासी for ०पूर्णमासं.

3. Al. इत्यादीनि for इत्यादीनां; R. कर्मान्ताग्निं; Al. कस्मात्ताग्निं for कर्मान्ते०

4. R. समग्निश्च०, Al. समाप्तेश्च०

6. RAl. भर्येरणीयाः for भरणीयाः

10. RAl. दद्यादितिथिर्न(Al र्ना)र्म for दद्यात् । अतिथीन्नैव.

11. RAl. सत्य for सन्

12. पर्वणि *See* CN.

13. कार्यकारणत्वात् *See* CN. RAl. पर्वमात्रेण for पर्वमात्रम .

15. R. ०जीवञ्जतं for ०जीवं हुतं; R. पौर्णमास for पूर्णमासं

16. P. RAl. व्रीहिमयान् ०; B. व्रीहियवाꣳ꣱स्तिलतण्डुलान् for व्रीहि०....

**पवित्रवते । वरुणाय धन्वन्तरये । मनसा प्राजापत्यां ब्रह्मणे । अग्नये स्विष्टकृत इति पश्चात् ॥ ६ ॥**

सा - अथोक्तव्रतपूर्वकालाध्ययनानन्तरकर्तव्यं होममाह—**कर्मान्ते** इति। **कर्मान्ते** उक्तकर्मणः संवत्सरानुष्ठानान्ते । शिष्टं स्पष्टम् । पवित्रवत्त्वगुणकाय **सोमाय** । धन्वन्तरित्वगुणकाय **वरुणाय** । धन्व निरुदकप्रदेशः, तं तारयति वृष्ट्युदकेनेति धन्वन्तरिः । **प्राजापत्यां** प्रजापतिदेवताकां भूरादिकां व्याहृतिं **मनसा** मन्त्रमुच्चारयन्नेव **जुहुयात्** । **पश्चात्** उक्तहोमावसाने **अग्नये स्विष्टकृते** इति **जुहुयात्** । परिचरणतन्त्रेणेदं कर्तव्यम् ॥ ६ ॥

भ · **कर्मान्ते** संवत्सरान्तर इत्यर्थः । संवत्सरं हि व्रतमित्युक्तम् । अग्निं प्रतिष्ठाप्य परिचरणतन्त्रेण [इत्यर्थः] । व्रीहिमयाश्स्तण्डुलानित्यादि पश्चादित्यन्तं निगदसिद्धम् । **सोमाय पवित्रवते** स्वाहेत्येको मन्त्रः । **स्विष्टकृते** इत्यन्ताः प्राहुतय इति ॥ ६ ॥

## 9. अथातः पाञ्चरात्रिकाणाम् ।

सा - अथ पाञ्चरात्रिकाणां प्रयोगविशेषमाह--**अथात** इति । **अथ** संवत्सरव्रतानाम् अध्ययननियमानन्तरम् । यतो वक्ष्यमाणानां पाञ्चरात्रिकाणां व्रतनियमानभिधानेऽनुष्ठानमशक्यम्, **अतः पाञ्चरात्रिकाणाम्** पञ्चरात्रनिर्वर्त्याध्ययनानां साधारणकल्प उच्यत इति शेषः ।

---

1. My पितृमते for पवित्रवते.
2. My प्रजापतये for अग्नये.
3. P. अथ पूर्वोक्ताध्ययनानन्तरं कर्तव्यं for अथोक्त०
4. P. उक्तकर्मसर्वानुष्ठानान्ते for उक्तकर्मणः . . . ; पवित्रवत्त्व *See* CN.
5. A. अविशङ्कप्रदर्शितानन्तराय वृष्ट्युदकेनेति धन्वन्तरिः, B. धन्वप्रदेशे तं तारयति वृष्ट्युदकेनेति० Bl. धन्वन्तरिरुदकप्रदेशस्तं तारयति. . .for धन्व निरुदक०
6. P. वृष्ट्यादिना for वृष्ट्युदकेन.
7. A. उच्चारयन्नाम्नैव for उच्चारयन्नेव ; P. उदक for उक्त.
8. P. (व)त्वेतत् for (इ)दं
12. RAl. सौविष्टकृत्यन्ता स, the passage is corrupt.
15. P. संवत्सरानियमानन्तरम् ; A. संवत्सरव्रतानां नियमाध्ययननियमा०. for संवत्सर० . . .
16. P. पृथङ्० for व्रत०
17. P. पञ्चरात्रिदिवाध्ययनानां, Bl. पञ्चरात्रनित्याध्ययनानां for पञ्च०.

**भ - अथातः** पञ्चरात्रनिर्वर्त्यानां स्वाध्यायाध्ययनानां साधारणः कल्प उच्यत इति ।

## व्रीहियवौ भोजनमसौहित्यम् ।

**सा—व्रीहियवौ** ओषधिद्रव्ये । **भोजनं** भुज्यतेऽनेनेति भोजनमन्नम् । करणे ल्युट् । व्रीहिभिर्यवैर्वा निष्पन्नं चरुमश्नीयादित्यर्थः । **असौहित्यम्** उक्तभोजनकालेषु सुहितत्वं न कर्तव्यम् । येन संपूर्णाशनेन सुहितं भवति तन्न कर्तव्यम् । किंतु व्रतिनां शास्त्रे यो ग्रासनियम उक्तः तेन वर्तयेदित्यर्थः ।

**भ - व्रीहियवौ** इति जातावेकवचनम् । ताभ्यां च तद्विकारो लक्ष्यत इति **भोजनम्** अन्नं व्रीहीणां वा यवानां वोभयेषां वा विकारोऽन्नस्य नान्यतः । **असौहित्यम्** [अ] तृप्तिरन्नेन । असंपूर्णमशनं स्यादित्यर्थः ।

## अन्ते त्वग्न्यादिरुक्तः कल्पः ।

**सा - अन्ते तु** पञ्चरात्रव्रतान्ते तु **अग्न्यादिः** पूर्वस्मिन् प्रयोगे योऽग्निं प्रतिष्ठाप्य व्रीहियवांस्तण्डुलानित्यादिकः **कल्प उक्तः** स एवात्रापीत्यर्थः । अत्रान्तग्रहणात् पूर्वप्रयोगे यो भृत्यातिथिशेषभोजीत्यादिनियम उक्तः कल्पोऽस्ति स नात्र ग्रहीतव्यः । पूर्वस्मिन्नपि संवत्सरप्रयोगेऽग्निं प्रतिष्ठाप्य अग्न्यभावे तूदकमित्यादि न प्राप्नोति । एतेन कल्पेनेति तत्रानभिधानात् ।

---

1. RAl. निर्वृत्तानां for निर्वर्त्यानां.

3. M. ०हितम् for ०हित्यम .

4. P. ओषधी for ओषधिद्रव्ये A. om. इति.

5. AB. करणे पुरा for करणे.... ; P. om. वा.

7. A. व्रतीनां, B. व्रतानां for व्रतिनां.

9. RAl. च for secnd वा.

10. R. तृप्तिवत्त्वेन for [अ]तृप्ति'...

12. P. व्रतानन्तरं for व्रतान्ते ; P. om. यः.

13. ०मयान् for ०यवान् .

14. P. अन्ते त्वितिग्रहणात् for अन्त०... ; P. om. यः. Bl. P. ०भोजीत्यादिनोक्तः for ०भोजीत्यादि . . . ; P. कल्पो योऽस्ति for कल्पोऽस्ति.

15. P. संवत्सरेऽग्निं for संवत्पर...

16. P. तूदकमादित्यादि०; BBl. तूदकमित्यादिः सोऽपि न प्राप्नोति for तूदक०...;BBl. अत्रानभि०, P. तत्रानवि० for तत्रानभि०.

भ - पञ्चरात्रस्य **अन्ते** पञ्चमेऽहनि कर्मान्ते **अग्न्यादिः** **कर्मान्तेऽग्निं प्रतिष्ठाप्य व्रीहिमयानित्यादिः** **उक्तः** **कल्पः** स्यात् । **अन्त** इति वचनादादावुक्त[ः]कल्पो न स्यात् । **अग्निं प्रतिष्ठाप्याग्न्यभावे तूदकमादित्यं** वेत्यादि पूर्वोक्तेऽपि सांवत्सरिके प्रयोगे[न ।]एतेनैव कल्पेनेत्यव[च]नात्। अन्त-प्रोक्त एव कल्पो भवेत् । नैव पूर्वोक्तः ॥

## काम्यानां चाविप्रतिषेधः ॥ ७ ॥

सा - **काम्यानां** कामनाभेदेन पुरस्ताद्विधास्यमानानां कर्मणामपि पञ्चरात्राधिकारेऽभिहितैः **अन्ते** त्रित्यादिनित्यकर्मभिः सह **अविप्रतिषेधः** परस्परं विरोधो नास्ति । अतः काम्याध्ययनैः सह चिकीर्षा कुर्याद्वेत्यर्थः ॥ ७ ॥

भ - **काम्याना**मिति । अथातः **काम्याना**मिति वक्ष्यमाणानां काम्यानां [कर्मणां] प्रयोगेणाविरोधः । तेषामपि चिकीर्षायां नित्यम् एतत्प्रयोगः कार्य इति पाञ्चरात्रिकाणां सर्वेषां समानोऽयं विकल्पः ॥ ७ ॥

## तमिन्द्रं वाजयामसीति चतुर्वर्गेण चातुर्मास्यान्यवाप्नोति । अस्य प्रेषेति पाशुकानि ।

---

3. Al. अग्न्यभावात्तूदकम् R. अग्न्यभावरुदकम् for अग्न्यभावे...

4. RAl. कल्पेनेत्यवनादन्तप्रोक्त (क्ता Al.) एव कल्पो भवेत्त एवं पूर्वोक्तः for कल्पेनेत्य.० . .।....।... पूर्वोक्तः ।

6. P. वा for च.

7. P. om. कामना; Bl. काम्यानां for कामना BBl. परस्ताद् for पुरस्ताद् ; P. अथ for अपि

8. A. ०रात्राग्रसत्याधिकारे निजतो श्रोतुर्मा स्यादिति नित्यकर्मभिः, B. ०रात्रतमिन्द्रं वाजयामसीत्यधिकारे त्रिजघ्नतेश्चातुर्मास्यादिनीत्यकर्मभिः, Bl. ०रात्राधिकारे निर्जितैश्चातुर्मास्यादिनित्यकर्मभिः for ०रात्राधिकारे...

9. P. काम्यानप्यैतैः for काम्याध्ययनैः ; P. कुंयोदव for कुर्याद्वा

10. RAl. कामयनामानप्रयोगेण (णातास Al.) विरोधः for काम्यानां....

13. T. वाजयामहि for वाजयामसि.

**सा** - एवं नियमवान् **'तमिन्द्रं वाजयामसि'** (साम I. 119) इत्यस्यामृच्युत्पन्नेन **चतुर्वर्गेण** सामचतुष्टयेन । तत्स्वाध्यायेनेत्यर्थः । तेन **चातुर्मास्यान्यवाप्नोति** । अत्र यद्यपि **चातुर्मास्यान्यवाप्नोती**ति सामान्येनोक्तम् , तथाप्यैष्टिकपाशुकसौमिकभेदेन तेषां त्रैविध्यात् , पाशुकस्योत्तरवाक्ये विधानात् , सौमिकस्य च सोमप्रयोगे वक्ष्यमाणत्वात् , इहावासत्यमैष्टिकमेवेति मन्तव्यम् । **'अस्य प्रेषा'** (I. 526) इति अस्यामृच्युत्पन्नेन षड्वर्गेण **पाशुकानि** चातुर्मास्यान्यवाप्नोति । अत्र संख्याविशेषाश्रवणेऽपि स्वाध्यायपाठे (गे. गा. 15. 2. 4. 5) स्तोभविन्यासभेदेनास्यां षड्वर्गसद्भावादिहापि षट्संख्याश्रयणीया ॥

**भ** - स्पष्टोऽर्थः इति । **अस्य प्रेषे**ति पाशुकानि त्रिविधानि चातुर्मास्यानि । ऐष्टिकानि पाशुकानि सौमिकानि च [इति] । अनेन षड्वर्गेण पाशुकानि चातुर्मास्यान्यवाप्नोति । कथमेतदवगम्यते । षड्वर्गेणेति । **'अस्य प्रेषे'**त्येतावन्मात्रस्य श्रवणात् विशेषाश्रणाच्च । कानि पुनस्तानि षट् स्वाध्यायपाठेऽधीतानि ? अस्या औ हो वा । इति प्रकारेण चतुर्षु पादेषु प्रथमं साम । उ हु वा इ अस्या ३४ [औ] हो वा । इत्येवं चतुर्थ(र्षु?)-पादेषु द्वितीयम् । एवमुत्तराण्यपि प्रतिपादं दर्शनीयानि । हा इ । उ हु वा इ । देवा ३४ औ हो वा । इति तृतीयम् । हाउ । हो इ । सुता ३४ औ हो वा । इति चतुर्थम् । हा । हा औ हो इ । मिता ३४ औ हो वा । इति पञ्चमम् । औ हो वा हा ३ हो इ । इ डा । अस्य प्रेषा । हे ३ मना इति षष्ठम् । इति स्वाध्याये प्रतिपादं स्तोभविकाराणामाम्नातत्वात् अवगम्यत इति ॥

## 10 त्रातारमिन्द्रं यजामह इत्येताभ्यां पशुबन्धम् ॥

---

1. AB. om. ऋचि

3. AB. सामान्यतोक्तम् for सामान्येन०; P. ऐष्टिकसौमिकपाशुक० for ऐष्टिक०.

5. P. प्रसङ्गे for प्रयोगे

6. ABl. om. ऋचि; A. om. चातुर्मास्यानि; BBl. फलानि for चातुर्मास्यानि.

7. P. भेदेनास्य, B. भेदेनास्य for भेदेनास्यां

8. षड्वर्गसद्भावाद् *See* CN. P. सा स्यात् for आश्रयणीया

10. RAl. एष्टिकानि....सोमिकानि for ऐष्टिकानि...

19. इति स्वाध्याये *See* CN.

20. A. adds पयोव्रत एतेन कल्पेन before त्रातारम

सा - अस्य पशुबन्धाध्ययनप्रयोगमाह—त्रातारमिन्द्रमिति । 'त्रातारमिन्द्रं' (I. 333) 'यजामहे' (I. 334) इत्येताभ्यां सामभ्यां निरूढपशुबन्धमवाप्नोति ॥

भ - पशुबन्धं निरूढ संवत्सरे अयनयोर्वा कार्यत्वेन विहितमवाप्नोति ॥

## 11. पयोव्रत एतेन कल्पेन बृहदिन्द्राय गायतेति चतुर्वर्गेण सौत्रामण्यौ सौत्रामण्यौ ॥ ८ ॥ ३ ॥

सा - अथ सौत्रमणीफलकामस्य प्रयोगमाह—पयोव्रत इति । पयोव्रतः व्रतशब्दोऽत्र भोजने वर्तते । पयसा पूर्वप्राप्तव्रीहियवनिवृत्तिरिति इयानत्र विशेषः । एतेन कल्पेन इत्युक्तत्वात् "अग्निं प्रतिष्ठाप्य व्रीहियवांस्तण्डुलानित्यादिरन्ते त्वगन्यादिरुक्तः कल्पः" इत्यतिदेशतः प्राप्तः पूर्वोक्तः कल्पोऽत्रापि विद्यत एवेत्यत्र पयोव्रतस्य व्रतविशेषत्वात्तदभिधानं युक्तम् । एतेन कल्पेनेत्येतन्न वक्तव्यं स्यात् । यथा पूर्वस्मिन् प्रयोगे तस्य पाक्षरात्रिकाणामिति, सामान्यतः प्राप्तत्वात् । नैष दोषः । अत्र पयोव्रताद्यनियमविशेषविधानादितरत्सर्वं सामान्यतः प्राप्तं लुप्येतेति स्यान्मतिः, अतस्तन्निवृत्त्यर्थं पुनरभिधानं

---

1. P. अथ for अस्य

2. P. om. सामभ्यां

4. RAl. ३ (इ Al.) अय (ज्ञाप R.) नयोः श्चार्वा कार्य (र्थ Al.) त्वेन for अयनयोः....

8. Bl. B. ०व्रतम् for ०व्रतः.

9. Bl. B. पयोव्रतं for पयोव्रतः ;

A. ०प्राप्तस्य for ०प्राप्त०; Bl. ०यवयोः नि० for ०यवनि० P. तावद् for इयान्.

10. P. ०यवमयान् for ०यवान्.

11. A. om. पूर्वोक्तः; P. कल्पोऽप्यत्र for कल्पोऽत्रापि.

12. P. एव । नन्वत्र for एवेत्यत्र; Bl. om. ०व्रतस्य

13. AB om. न; P. om. स्याद्; P. अतः for यथा

14. AB. तत्र for अत्र; A. ०विशेषनियमविधानात्, BBl. ०विशेषे नियमविधानात् for नियम...

15. AB Bl. मतिः स्यात् for स्यान्मतिः

युक्तमेव । एवंव्रतो 'बृहदिन्द्राय गायत'—(साम. I. 258) इति चतुर्वर्गेण अस्यामुत्पन्नसामचतुष्टयेन सौत्रामण्यौ अविकृतचरकाविकृतकोकिलसंज्ञके उभे अप्यवाप्नोतीति शेषः । अभ्यासः खण्डसमाप्तिद्योतनार्थः ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये तृतीयः खण्डः ॥ ३ ॥

भ - व्रतमित्यन्तमुच्यते । पयोव्रत इति व्रीहियवस्थाने पय एव व्रतं स्यात् । अथेति एतेन पूर्वोक्तेन कल्पेन । किमर्थमिदमुच्यते? उक्तमेव हि पाञ्चरात्रिकाणां सर्वेषामेष धर्म इति । सत्यम् । तथापि पयोव्रत इत्यत्रापवाददर्शनात् सर्व—? इति भ्रमनिवृत्त्यर्थं पयोव्रतातिरिक्तानि सर्वाणि स्युरिति बोधनार्थमुच्यते । सौत्रामण्यौ अविकृतिकौकिलीसंज्ञे चोभे अवाप्नोति । बृहदिन्द्राय गायतेति चतुर्वर्गेणेति सां त्वा हि न्व इत्यादिस्तोभपूर्वकं प्रथमं प्रासम्, सांत्वारिण्येत्यादिस्तोभपूर्वकं तृतीयम्, सांत्वाशिशो इत्यादिस्तोभपूर्वकं चतुर्थम् । नन्वस्य प्रेषेति पाशुकानीतिवत् बृहदिन्द्राय गायतेति सौत्रामण्याविव्येतावतैवालम् । किमर्थं चतुर्वर्गेणेति? स्वाध्यायवैषम्यात् 'अस्य प्रेषे'त्यत्र प्रतिपादं स्तोभविकारस्य दर्शितत्वादहमात्रे(!) साम्नोऽवसानात् साम्नामावृत्तिः सुज्ञातेति तत्र षड्वर्गेणेति चोक्तम् । अत्र तु सर्वविकाराणामादावेवाम्नानादेकमेव साम चतुर्विधस्तोभपूर्वकमिति भ्रमणं स्यादिति तदपवा[रणा]र्थं चतुर्वर्गेणेत्युक्तमिति ॥

॥ तृतीयोऽनुवाकः ॥

---

1. B. एवंवृतः for एवंव्रतः

2. ABBl. उत्पन्नं for उत्पन्न॰; A. कौकिल; B. लौकक॰ for कोकिल॰ PAB om. अविकृतचरक

3. AB. समाप्त्यर्थः for समाप्ति....; A. om. the colophon and has instead only. तृतीयः खण्डः

6. RAl. व्रतपयोव्रते: for पयोव्रतः ; Ral. व्रतः for व्रतं

9. सर्व *See* CN.

10. RAl. अविकृती कौविकीर्षी चोभे for अविकृति...

12. RAl. यादि for second इत्यादि

13. RAl. नत्वस्य for नन्वस्य

16. RAl. वोक्ता for चोक्तम्

# चतुर्थः खण्डः

1. अथातः साप्तरात्रिकाणाम् । भैक्षं पयो वा व्रतमेके । भैक्षार्थायैव ग्रामं प्रविशेत् । नान्यत्र स्वाध्यायाद्वाचमुत्सृजेत् । अधः शयीत । नापोऽभ्यवेयात् । अन्ते त्वग्न्यादिरुक्तः कल्पः । काम्यानां चाप्रतिषेधः ॥ १ ॥

सा - अथ साप्तरात्रिकाणां प्रयोगमाह--अथातः साप्तरात्रिकाणामिति । अथ पाञ्चरात्रिकव्रतानां स्वाध्यायनियमानन्तरम् । अतः यतो वक्ष्यमाणानां साप्तरात्रिकाणां पृथङ्नियमविधिरस्ति, अतः कारणात् साप्तरात्रिकाणां सप्तरात्रव्रतानुष्ठायिनां साधारणनियमा उच्यन्ते । भैक्षं भिक्षासंबन्धि व्रतम् अशनं भवेदिति । एके अन्ये पयो वा भैक्षं वा व्रतं भवेदिति विकल्पमाहुः । पूर्वस्मिन् पक्षे भैक्षमेव । इह तु विकल्पेन द्वयोरप्यन्यतरद् भवेदित्यर्थः । भैक्षार्थायैव ग्रामं भिक्षान्नायैव ग्रामं प्रविशेत् । एवंव्रतः सोऽहोरात्रमरण्ये वसेत् । भैक्षव्रतपक्षेऽपि तदर्थमेव ग्रामं प्रविष्टो भवेदित्यर्थः । स्वाध्यायात् अन्यत्र अन्यस्मिन् काले वाचं नोत्सृजेत् ।

---

6. P. Bl. पाञ्चरात्रिकाणां for पाञ्च० ; P. ०नियमानन्तरत्वम् for नियमानन्तरम् .

7. AB Bl. व्रत for पृथङ्.

8. P. भैक्ष्यं for भैक्षं.

9. AB Bl. om. भवेदिति ; Bl. adds व्रताभिज्ञाः after अन्ये.

10. Bl. कल्पेत for विकल्पेन.

11. P. भैक्ष्यार्थायैव for भैक्षा० ; Bl P. om. भिक्षान्नायैव ग्रामं.

12. P. सप्तरात्रम् for अहो० ; P. पयः for भैक्ष.

13. B. भवतीत्यर्थः for भवेद्...

अध्ययनव्यतिरिक्तकाले मौनं कुर्यादिति यावत् । अधः शयीत शय्यादिभिर्विना भूमावेव शयनं कुर्यात् । अपः उदकानि न अभ्यवेयात् अभ्यवहारार्थं न प्राप्नुयात् । शिष्टं स्पष्टम् ॥ १ ॥

भ - अथातः साप्तरात्रिकाणाम् साधरणा [नियमा] उच्यन्त इति । व्रतमित्युपरितनमत्र संबध्यते । भैक्ष्यमन्नं स्यादिति । एके पयो वा भैक्षं वा व्रतं स्यादिति विकल्पमाहुः । पूर्वस्मिन् पक्षे भैक्षमेव । अत्र तु विकल्पेनोभयोरन्यतर[द्] इति । सप्तरात्रमरण्य एव वसेत् । भैक्षव्रतपक्षे ग्रामं प्रविशेत् । नान्यदेति । विहितस्वाध्यायव्यतिरेकेण मौनी स्यात् । अध एव शाय्यादिभिर्विना शयीत । अपश्च नाभ्यवेयात् न प्रविशेत् । अन्ते त्वग्न्यादिरित्यादि [निगद] सिद्धमिति ॥

**2. ईङ्खयन्तीरिति दशतꣳ रथन्तरं च वामदेव्यं चैतान्यनुसवनं प्रयुञ्जानोऽग्निष्टोममवाप्नोति ।**

सा - अथाग्निष्टोमसाधनाध्ययनप्रयोगमाह—ईङ्खयन्तीरिति । ईङ्खयन्तीः इति अस्यामुत्पन्नं दशतं दशवर्गं रथंतरं च वामदेव्यं च एतानि एतत्संज्ञकानि सामानि अनुसवनं सवने सवने प्रयुञ्जानः अग्निष्टोमं सर्वयज्ञप्रकृतिभूतं ज्योतिष्टोमम् अवाप्नोति ।

---

1. B. om. ०व्यतिरिक्त० ; AB Bl. तल्पादिभिः for शय्यादिभिः.
2. P. उदकादीन् for उदकानि ; B. अभ्यपेयात् for अभ्यवेयात्.
4. RAl. साधारणात्युच्यं ता for साधरणा०.
5. Al. adds अत्र after first वा.
8. RAl. सौती for मौनी ; RAl. अत्र for अधः.
11. M. वामदेवं for वामदेव्यं.
12. PA. add इति after अवाप्नोति.
13. P. om. साधन.
14. P. om. दशवर्गं. P. वामदेवं for वामदेव्यं. AB. om. एतानि ; P. केवलोक्तानि for एतत्संज्ञकानि.
15. P. adds. अनुष्ठीयमानः aftes प्रयुञ्जानः

भ - एवमत एतानि सामान्यनुसवन सवने सवने प्रयुञ्जान आवृत्तेरवेदितत्वात् सकृदनुसवनं सप्तरात्रं प्रयुञ्जानोऽग्निष्टोमं सर्वयज्ञप्रकृतिभूतं ज्योतिष्टोममवाप्नोतीति ॥

**3. यज्ञायज्ञा वो अग्नय इति चतुर्वर्गेणात्यग्निष्टोमम् ।**

सा - अथात्यग्निष्टोमोक्थ्यषोडश्यतिरात्राणां प्रयोगमाह—यज्ञायज्ञेति । 'यज्ञा वो अग्नय' (साम. i. 35) इति अस्यामुत्पन्नेन चतुर्वर्गेण सामचतुष्टयेनानुसवनं प्रयुञ्जानोऽग्निष्टोममवाप्नोतीति शेषः । अनुसवनं चाप्नोतीत्युत्तरत्रापि सर्वत्रानुषज्यते ॥

भ - अनेन चतुर्वर्गेणानुसवनं प्रयुक्तेन अत्यग्निष्टोमाख्यसोमयागमवाप्नोति । अत्रापि सर्वत्रानुसवनमनुषज्यते । सोमयागेषु [एषां] प्रत्याम्नातत्वात् । सोमेषु चानुसवनं प्रयोगात् कर्मणामिति ॥

**नमस्ते अग्न ओजस इति दशतोक्थ्यम्; पुनानः सोम धारयेति वर्गेण षोडशिनम्; परीतो षिञ्चता सुतमिति वर्गेणातिरात्रम् ॥**

सा - 'नमस्ते अग्न ओजसे' (साम. i. 11) इति अस्यामुत्पन्नेन दशता दशवर्गेण उक्थ्यम् अवाप्नोति । 'पुनानः सोम धारया' (साम. i. 511) इति अस्यामुत्पन्नेन वर्गेण सामसमूहेन षोडशिनम्

1. RAl. आवृत्तेरवे(वो R)दितवात् for आवृत्तेः...

7. Bl. adds. साम before चतुर् ०

8. P. after सामचतुष्टयेन adds: अग्निष्टोमम् अवाप्नोति and om. अनुसवनं चाप्नोतीति . . . अनुषज्यते · P. वाक्यशेषः for शेषः

11. सोमयागेषु *See* CN.

13. My. T. ओजसेति for ओजस इति.

14. T. धारया इति for धारयेति.

18. B. उत्पन्नवर्गेण for उत्पन्नेन वर्गेण.

अवाप्नोति । **'परीतो षिञ्चता सुतम्'** (साम. i. 512) इति अस्यामुत्पन्नेन **वर्गेण** सामसमूहेन **अतिरात्रम्** अवाप्नोति ॥

भ - स्पष्टार्थानि त्रीणि ।

**4. पयोव्रत एतेन कल्पेन तिस्रो वाच उदीरत (साम. i. 471) इति वर्गेण वाजपेयम् ॥ २ ॥**

**सा** - अथ वाजपेयार्थं प्रयोगमाह—**पयोव्रत** इति । अत्र सामान्यतो भैक्षपयसोः प्राप्तौ, पुनः पयोविधानाद् भैक्षं निवर्तते । अत एव पृथग्विधानबलादवशिष्टः कल्पो निवर्तेतेत्याशङ्क्य पुनः **एतेन कल्पेन** इत्युक्तम् । शिष्टं निगदसिद्धम् ॥

इति साप्तरात्रिकाणां कल्प उक्तः ॥ २ ॥

भ - **पयोव्रत** इति वचनं भैक्षस्य वैकल्पिकस्य [निवृत्त्यर्थम्] सिद्धप्रायमितरदिति । उक्तानि साप्तरात्रिकाणि ॥ २ ॥

**5. मासमेतेन कल्पेनाव इन्द्रं कृविं यथेति दशताप्तोर्यामाणम् ।**

**सा** - अथाप्तोर्यामार्थं प्रयोगमाह—**मासमि**ति । **एतेन** साप्तरात्रिकाणामुक्तेन भैक्षमित्यादिना **कल्पेन मासं** मासपूर्तिपर्यन्तं चरन्, **'आ व इन्द्रं क्रिविं यथा'** (साम. i. 214) इत्यस्यामुत्पन्नेन **दशता** दशवर्गेण **आप्तोर्यामाण**मवाप्नोति ॥

---

2. A. BBl. om. वर्गेण

4. MT. पयोव्रतम् for पयो०

6. P. सामान्येन भैक्ष्यपयसी प्राप्ते for सामान्यतः...

7. P. पयोव्रताभिधानात् for पयो०... ; A. अथ तत एव for अत एव.

8. AB एव शिष्टः for अवशिष्टः; Bl. निवर्तत इति for निवर्तेतेति.

11. निवृत्त्यर्थम् *See* CN.

15. AB यामार्थप्रयोगम् for यामार्थं प्र०.... ; Bl. मासमेतेन कल्पेनाव इन्द्रं क्रिविं यथा इत्यस्याम् for एतेन . . . इत्यस्याम् .

16. P. कल्पेन भैक्षमित्यादिकेन for भैक्षम्...कल्पेन; A. मासं मासं संवत्सरपर्यन्तं, B. मासं मासपूर्तिपर्यन्तो भवति for मासं...

भ - एतेन साप्तरात्रिकोक्तकल्पेन । शिष्टं स्पष्टमिति ॥

**6. मासं चतुर्थे काले भुञ्जान आजुहोता हविषा मर्जयध्वम्** (सा. i. 63.) **इति दशता द्वादशाहम् ॥ ३ ॥**

सा - अथ द्वादशाहार्थं प्रयोगमाह—**मास**मिति । अत्र कालमात्रस्यैव विशेषात् पूर्वोक्तो **भैक्षं पयो वा** इति नियमोऽनुवर्तते । स च मासं मासपूर्तिपर्यन्तो भवति । उक्तं भैक्षं पयो वा **चतुर्थे काले**—

**"सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।"** (म. स्मृ. ii. 52. [6]) इति स्मृतेः एकस्मिन् दिने द्वौ भोजनकालौ । तथा सति प्रथमदिनमुपोष्य द्वितीयदिने रात्रिश्चतुर्थः कालः । तस्मिन् एव । एवमुत्तरत्र **चतुर्थे काले भुञ्जानः** । भुञ्जानमितरत् ॥ ३ ॥

भ - एतेन कल्पेनेत्यनुवर्तते । इयांस्तु विशेषः—भैक्षं पयो वा चतुर्थे काले भुञ्जानो न मध्ये । स्पष्टमेवेतरदिति ॥

**7. संवत्सरमेतेन कल्पेनाबोध्यग्निरिति दशतं रथन्तरं च वामदेव्यं च बृहच्च वैरूपं च वैराजं च महानाम्न्यश्च रेवत्यश्चैतान्यनुसवनं प्रयुञ्जानो गवामयनमवाप्नोति ।**

सा - अहीनार्थं प्रयागमुक्त्वा सत्ररूपगवामयनार्थं प्रयोगमाह—**संवत्सर**मिति । **संवत्सरं** संवत्सरपर्यन्तम् **एतेन कल्पेन** सप्तरात्रोक्तेन **"भैक्षं पयो वा"** इत्यादिकेन युक्तः सन् अबोध्यग्निः (साम. i. 73) इत्याद्युक्तानि

---

2. My. adds च after चतुर्थे.
3. T. निर्दिशता for दशता.
5. A. Bl. पुर्वोक्तभैक्षं for पुर्वोक्तः भैक्षं ; P. om. अनु.
8. P. om. तथा सति.
9. PBl. om. एव.
10. Bl. समानम् for भुञ्जानम्.
19. Bl. om. अबोध्यग्निः इत्यादि.

सामान्यनुसवनं प्रयुञ्जानः गवामयनं सत्रप्रकृतिभूतं यागम् अवाप्नोति । केचित् एतेन कल्पेन इत्यतिदेशात् द्वादशाहोक्तचतुर्थकालनियमोऽप्यनुषज्यत इत्याहुः ॥

भ - सप्तरात्रस्यान्ते संवत्सरं शिष्टम् । साप्तरात्रिके केचिदेतान्यनुसवनं प्रयुञ्जानः कल्पेनेत्यनन्तरोक्तं चतुर्थकाले भोजनं वानुकृष्यत इत्याहुः । स्पष्टमन्यदिति ॥

## 8. राजनरौहिणाभ्यां तापश्चिते ।

सा - अथ तापश्चिताख्ययोः सत्रविशेषयोः प्रयोगमाह—**राजनेति** । उक्ताभ्यां सामभ्याम् **अनुसवनं प्रयुञ्जानः** क्षुल्लकं महच्चेति **द्वे तापश्चिते अवाप्नोति** । गवामयननियमोऽत्रापि विधत एव ॥

भ - राजनरौहिणाभ्याम् । अनुसवनं प्रयुक्ताभ्यां तापश्चिते उभे क्षुल्लकं महच्च अवाप्नोतीति ॥

## 9. पयोव्रत एतेन कल्पेन सोमः पवते जनिता मतीनाम् (साम. i, 527) इति चतुर्वर्गेण चातुर्मास्यानि सौमिकान्यवाप्नोति ॥ ४ ॥

सा - पूर्वमैष्टिकपाशुकचातुर्मास्यानां प्रयोग उक्तः । इदानीं सोमयागप्रसङ्गेन सौमिकचातुर्मास्यार्थं प्रयोगमाह—**पयोव्रत एतेनेति** । स्पष्टमेतत् ॥ ४ ॥

भ - सिद्धप्रायमेतदिति ॥

## 10. संवत्सरमष्टमे काले भुञ्जानो ग्राम्यमन्नं प्र तु द्रवेति दशतमावर्तयन् नैमिशीयं द्वादशसंवत्सरमवाप्नोति ॥ ५ ॥

---

1. Bl. om. भूतं
2. P. Bl. ०देशेन for ०देशात्.
3. RAl. एतेनान्यनु० for एतान्यानु०
4. RAl. कल्पेनेकत्यनंततोक्तं for कल्पेन०...
7. AB. सत्रयोः for सत्र०; Bl. ०शेषयोः for विशेषयोः
8. AB. प्रयुञ्जाना० for प्रयुञ्जानः ; A. BBl. om. द्वे.
10. RAl. प्रयुक्षकाभ्या for प्रयुक्ताभ्यां

सा - अथ द्वादशसंवत्सरसाध्यसत्राय प्रयोगमाह—**संवत्सर**मिति । **संवत्सरं** संवत्सरपूर्तिपर्यन्तं **ग्राम्यमन्नं** व्रीहियवाद्यन्नम् **अष्टमे काले भुञ्जानः** एकस्मिन् दिवसे अहनि रात्रौ चेति भोजनस्य कालद्वयाङ्गीकारात् दिवसत्रयमुपोष्य चतुर्थदिवसे रात्रौ भोजनस्याष्टमः कालो भवति । एवमुत्तरत्रापि । अष्टमे काले भुञ्जानः, इतरेषु कालेष्वनश्नन् **प्र तु द्रवेति दशतं** "प्र तु द्रव परिकोशम्" (साम. i. 523) इति दशवर्गं नित्यकर्माविरोधेन संवत्सरम् **आवर्तयन् नैमिशीयम्** नैमिशमरण्यम्, तत्रत्या महर्षयो नैमिशीयाः तैरनुष्ठितं **द्वादशसंवत्सरं** सत्रं "त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रयः एकविंशाः"—(आ. श्रौ. 12. 5. 16) इत्यादिनोक्तम् **अवाप्नोति** ॥ ५ ॥

भ - "त्रयस्त्रिवृतः संवत्सरास्त्रयः पञ्चदशास्त्रयः सप्तदशास्त्रयः एकविंशाः (आ. श्रौ. 12. 5. 16) इत्यत्रोक्तं नैमिशीयानामृषीणामिदं सर्वसिद्धिसाधनं नैमिशीयं द्वादशसंवत्सरम् । स्पष्टमिनरदिति ॥

## 11. आग्नेयमैन्द्रं पावमानमित्येतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जानः शतसंवत्सरमवाप्नोति ॥ ६ ॥

सा - अथ शतसंवत्सरसत्रार्थं प्रयोगमाह—**आग्नेय**मिति । आग्नेयः अग्निः प्रतिपाद्यत्वेन देवता यस्य स अग्नेयः काण्डः । एवमैन्द्रपावमानौ । छन्दोग्रन्थ उक्तकाण्डत्रयात्मकः । त्रीनपि काण्डान् । चत्वारि वर्षाणि

---

2. A. om. संवत्सर...व्रीहियवाद्यन्नम् ; BlB. व्रीहियवादिमयम् or व्रीहि...

3. A. भोजनद्वयाङ्गीकारात् BBl. भोजनकालद्वयाङ्गीकारात् for भोजनस्य . . .

4. A. om. अपि.

5. AB. उक्तेषु Bl. उत्तरेषु for इतरेषु ; A. अश्नन् for अनश्नन् .

7. BBl. निमिशम् for नैमिशम .

11. Al. सर्ग for सर्व.

13. P. अनेन for एतेन.

16. P. om. काण्डः; AB. एवमैन्द्रं पावमानम् for एवमैन्द्र...

17. AB. ०ग्रन्थे उक्तः for ०ग्रन्थ उक्त०

वर्षचतुष्टयपर्यन्तम् **एतेन कल्पेन** पूर्वोक्तग्राम्यान्नाष्टमकालभोजननियमेन **प्रयुञ्जानः शतसंवत्सरं** शतसंवत्सरसाध्यो यः सत्रस्तम् **अवाप्नोति** ॥ ६ ॥

भ - **एतेन कल्पेने**ति अष्टमे ग्राम्यमन्नं भुञ्जान इति । आग्नेयादीनि त्रीणि पर्वाण्यन्वहं **प्रयुञ्जानश्चतुर्वर्षैः शतसंवत्सरमवाप्नोती**ति ॥

**12. सर्वं प्रयुञ्जानः सहस्रसंवत्सरमवाप्नोति । अनश्नन् संहितासहस्रेण वा पृष्ठोपतापशतसहस्रेण वा ॥ ७ ॥**

**सा** - अथ सहस्रसंवत्सरसत्रार्थं प्रयोगमाह--**सर्वं प्रयुञ्जान** इति । सहस्रसंवत्सरसत्रप्राप्तिस्त्रिविधा । एकवारसंहिताध्ययनसाध्या, एकसहस्रवारावृत्तिसाध्या, शतसहस्रवारावृत्तिसाध्या चेति । तत्र प्रथमोच्यते । **सर्वम्** अत्र सर्वशब्देन पूर्वोक्तमाग्नेयादिपर्वत्रयं सरहस्यं सशक्करीकं गृह्यते । तत् **प्रयुञ्जानः** अत्र विशेषाश्रावणात् ग्राम्यान्नमष्टमे काले भोजी वर्षचतुष्टयपर्यन्तमन्वहं प्रयुञ्जानः **सहस्रसंवत्सरं** सत्रम् **अवाप्नोति** । अथ द्वितीयोच्यते । **अनश्नन्** भोजनमकुर्वन् **संहितासहस्रेण** आग्नेयादिपर्वत्रयस्य सरहस्याध्ययनमेका संहिता । तस्याः सहस्रवारावृत्तिः संहितासहस्रम् । तया चावृत्त्या **सहस्रसंवत्सरं सत्रमवाप्नोति** । वाशब्दः पूर्वेण सह विकल्पार्थः । अत्रावृत्तिर्यावति काले संपूर्यते, तावतः कालस्यापेक्षितत्वात् पूर्वोक्तवर्षचतुष्टयकालो नानुवर्तते ।

---

1. P. ०चतुष्टयमन्वहम् for चतुष्टयपर्यन्तम ; A. पूर्वोक्ताग्राम्यानिष्टभोजने नियमेन for पूर्वोक्त...

2. AB Bl. om. प्रयुञ्जानः शतसंवत्सरं

8. B. एका, P. एव for second एक; P. adds तस्याः after साध्या.

9. A om. वार

10. A. अग्न्याधेय० for आग्नेय०; P. अभिधीयते for गृह्यते

11. AB. काम्यान्नम् for ग्राम्यान्नम; A. अष्टमकाले भोजी, PBl. अष्टमकालभोजी for अष्टमे ...

13. Bl. om. संहिता ; P. सशक्करीकस्य, A. सहस्र० for सरहस्य०

15. A. PBl. om. सत्रम ; P. आद्येन for पूर्वेण.

16. Bl. कालेना० for काले ना०

अनशनविधानादेवाष्टमकालग्राम्यान्नाशननिवृत्तिश्च । अथ तृतीयोच्यते । **पृष्ठोपतापशतसहस्रेण** वा प्राङ्मुखमधीयानस्य पृष्ठभागं यावति काले पर्यावर्तमानः सूर्य उपतापयति स पृष्ठोपतापः कालः । तावत्कालसाध्यशतसहस्रावृत्तिरूपाध्ययनं पृष्ठोपतापशतसहस्रं, तेन वा उक्तसत्रमवाप्नोति । अयमर्थः—उदयमारभ्य पृष्ठोपतापनपर्यन्तं पर्वत्रयात्मिकां संहितामुपक्रम्याधीयीत । ततो भुञ्जीत । अनन्तरं नाधीयीत । परेद्युरपि तथैव तदुपरिभागमुपक्रम्याधीयीत । एवमन्वहमधीयाने सति, यावति काले उक्तमावर्तनं सिध्यति तावत्कालाध्ययनेन वा उक्तसत्रमवाप्नोति । अत एव चतुर्वर्षकालेयत्ता ग्राम्यान्नादिभोजननियमश्च नापेक्ष्यते । विशेषाश्रवणात् प्राजापत्यं वैश्वसृजं चोभयमपि सहस्रसंवत्सरसत्रमत्र गृह्यते ॥

भ - **सहस्रसवत्सरमिति** विशेषादर्शनात् प्राजापत्यं वैश्वसृजं चोभयं गृह्यते । **सर्वं प्रयुञ्जान** इति सरहस्यमाग्नेयादीनां पर्वत्रयं [स]शक्करीकमित्यर्थः । अत्र त्रयः [कल्पाः] । अन्वह चत्वारि वर्षाणि अष्टमे काले ग्राम्यमन्नमश्नन् प्रयुञ्जीतेत्येकः कल्पः । [स]रहस्यमाग्नेयादीनां कल्पानामध्ययनमेका संहिता । सा यावता कालेन सहस्रकृत्व आवर्तिता तावन्तं कालमात्यन्तिकमनशनं कुर्यात् । संहितां सहस्रकृत्व आवर्तयेदित्यपरः ।

1. AB Bl. om. (अ)शन.

2. before प्राङ्मुखम् P. adds: उक्तसत्रमवाप्नोति । अयमर्थः—उदयमारभ्याजस्रेण; P. पृष्ठं for पृष्ठभागं.

3. AP. सूर्योऽप० ... पृष्ठाप० for सुर्य उप...; PBl. om. कालः.

5. Bl. adds अन्वहं after ततः.

6. P. तद्वद् for तद्.

7. AB अधीयमाने for अधीयाने; AB उक्तसंवर्तनं Bl. उक्तसंवत्सरं for उक्तमावर्तनं.

8. Bl. AB एव for वा; A. चतुर्थकाले अत्र ग्राम्या०, BBi. चतुर्षु कालषु अत्र ग्राम्या० for चतुर्...

9. AB नापेक्षते for नापेक्ष्यते; P. om. प्राजापत्यं...सत्रमत्र गृह्यते.

12. RAl. वा for च; RAl. सर्वे (Al वें) हास्यम् for सरहस्यम्.

13. Al. om. अत्र त्रयः.

14. RAl. सर्वे (वें Al.) जातेत्येकः for प्रयुञ्जीतेत्येकः...

पृष्ठापतापशतसहस्रेणेत्यपरः । उदयादारभ्य प्राङ्मुखः संहितामधीयीतेति सिध्यति । एषां त्रयाणां कल्पानां श्रद्धाशक्तिभ्यां विकल्पनियमः । स्मर्यते हि विश्वामित्रादयो बहूनि वर्षाणि अनश्नन्तस्तपस्तेपुरिति ॥

**13. प्रथमस्त्रिवर्गः सावित्र्यां गायत्रं महानाम्न्यश्चैषामृता नाम संहितैतया वै देवा अमृतत्वमायन् ॥**

सा - यज्ञावाप्तिसाधनान्यध्ययनान्युक्तानि । अथ स्वतन्त्रफलसाधनानि कानिचिदध्ययनान्युच्यन्ते । तत्रादौ मोक्षसाधनं प्रयोगमाह—**प्रथम** इति । **प्रथमस्त्रिवर्गः** 'अग्न आ याहि वीतये' (साम. i. 1) इत्यस्यामृच्युत्पन्नः **त्रिवर्गः** त्रीणि सामानि, 'तत्सवितुर्वरेण्यम्' (साम. ii. 1462) इत्येतस्यां **सावित्र्यां गायत्रं** साम, **महानाम्न्यश्च** सामानीति । **एषा अमृता नाम संहिता** । **एतया, वै** इति प्रसिद्धौ, उक्तया संहितया **देवाः** इन्द्रादयः **अमृतत्वं** मोक्षम् **आयन्** प्राप्नुवन् । अत एतां संहितां नित्यमधीयानो मोक्षमेतीत्यर्थः । यद्यपि न विधिः श्रूयते, तथापि "यत् स्तूयते तद् विधीयते" इति न्यायात् अमृतत्वकाम एतामधीयीतेति विधिरभ्यु(भ्यु?)पगन्तव्यः । देवानाममृतत्वप्राप्तिबलादपि मोक्षार्थिभिरन्यैरेतदनुष्ठेयमिति गम्यते ॥

---

4. RAl. add अथ before प्रथमः.

6. B om. अध्ययनानि.

7. B. ०साधनप्रयोगफलम् for साधनं...

8. P. tr. प्रथमस्त्रिवर्गः after इत्यस्याम्; A om. वीतये; P. इत्येतस्यां प्रथमस्त्रिवर्गः सामत्रयात्मको वर्गः for इत्यस्याम्... त्रीणि सामानि; Bl. om. इत्यस्यामृच्युत्पन्नः त्रिवर्गः.

9. ABl. om. "तत्सवितुर्वरेण्यम्" इत्येतस्यां.

10. P. om. साम.

11. ABBl. add देवाः after वै; PA. प्रसिद्धम् for प्रसिद्धौ; P. adds वै after उक्तया.

12. ABBl. om. इन्द्रादयः.

13. A. मोक्ष्यतेत्यर्थः for मोक्षमेतीत्यर्थः; Bl. om. यत् स्तूयते तत्.

भ · उक्तानि यज्ञावाप्तिसाधनानि । अथ स्वतन्त्राणि कानिचिदाह—अथ प्रथमस्त्रिवर्गः । सावित्र्यां गायत्रं महानाम्न्यश्चैषामृता नाम संहिता अमृतत्वसाधनत्वादेषामृता नाम संहितेति ॥

एतया वै देवाः । य एतया पूर्वं देवा अमृतत्वमायन ।

**14. अमृतत्वमेति य एवं वेद ॥**

सा उक्तार्थवेदितुः फलमाह—**अमृतत्वमेति य एवं वेदेति** । **अमृतत्वं देवत्वमेति** । एतां प्रयुञ्जन्निति ॥

भा - अथ विदुषः स्तुतिः—**य एवं वेद** । सोऽप्यमृतत्वमेतीत्यनुषङ्ग इति ॥

**15. इदँ ह्यन्वोजसा** (सा. i. 165) **इति प्रथमोत्तमे त्वामिदा ह्यो नरः** (सा. i. 302) **स पूर्व्यो महोनां** (सा. i. 355) **पुरां भिन्दुर्युवा कविर्** (सा. i. 359) **उपप्रक्षे मधुमति क्षियन्तः** (सा. i. 444) **पवस्व सोम मधुमाँ ऋतावा** (सा. i. 532) **सुरूपकृद्राहसं माधुच्छन्दसमेषा माधुच्छन्दसी नाम संहितैतया वै देवाः स्वर्गं लोकमायन् ॥**

सा - अथ स्वर्गसाधनप्रयोगमाह—**इदं हीति** । उक्तानि सामानि स्पष्टानि । **सुरूपकृद्राहसं माधुच्छन्दसम्** इति "सुरूपकृत्नुमूतये" (साम. i. 160) इत्यस्यामुत्पन्नं साम **राहसं** रहस्ये अरण्ये गेयम् । तच्च मधुच्छन्दसा दृष्टं **माधुच्छन्दसम्** । **एषा** उक्ता सामसंहिता **माधुच्छन्दसी** इति प्रसिद्धा । **एतयेत्यादि** पूर्ववत् ॥

---

1. RAl. वै दाह for ०चिदाह.
4. RAl. after first देवाः add:—स्वर्गं लोकमायन्त्स्वर्गं लोकमेति
6. A. उक्तार्थे for उक्तार्थ ; P om. य एवं वेद.
14. MT ०कृतुराहसं, AlA ०क्राहसं for ०कृद्राहसं.
17. A. ०क्राहसं for कृद्राहसं.
19. PA om. माधुच्छन्दसम् ; P. उक्त for उक्ता, Bl. एषामुक्ता सामिका संहिता for एषा उक्ता सामसंहिता.

भ - इदं ह्यन्वोजसेत्यादि य एवं वेदेत्यन्तं निगदसिद्धम । सुरूपकृद्राहसं माधुच्छन्दसमिति 'सुरूपकृत्नुमूतये' इत्यस्यां गीतं रहस्यं माधुच्छन्दसमिति

## 16. स्वर्गं लोकमेति य एवं वेद ॥

सा - अथ वेदितुः फलमाह—स्वर्गं लोकमिति ॥

**17. आ वो राजा** (सा. i. 69) **तद्वो वर्ग आज्यदोहानि देवव्रतानि चैषा रौद्री नाम संहितैतां प्रयुञ्जन् रुद्रं प्रीणाति ॥**

सा - अथ रुद्रप्रीतिसाधनमध्ययनप्रयोगमाह—**आवो राजेति** । **तद्वो वर्गः** "तद्वो गायसुते सचा" (साम. i. 115) इति वर्गो ग्राह्यः । शिष्टानि स्पष्टानि । **एषा** उक्तसामरूपा **संहिता रौद्री** इति प्रसिद्धा । **एतां** रुद्रसंहितां सदा **प्रयुञ्जन्** पुरुषो **रुद्रं प्रीणातीति** । अनया प्रीतो रुद्रः स्वं लोकं प्रयच्छतीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ॥

भ - **तद्वो वर्गः** 'तद्वो गाय सुते सचा' (साम. i. 115)इति वर्गः । शिष्टं स्पष्टमिति ॥

**18. इदं विष्णुः** (साम. i. 222) **प्रक्षस्य वृष्णः** (साम. 609) **प्रकाव्यमुशनेव ब्रुवाण** (साम i. 524) **इति वाराहमन्त्यं पुरुषव्रते चैषा वैष्णवी नाम संहितैतां प्रयुञ्जन् विष्णुं प्रीणाति ॥**

---

1. RAl. अन्ते for अन्त.

9. A. वर्गाः for वर्गः; B. गायेति वर्गः ग्राह्यः, A सुतेत्यस्यामृचि चत्वारि सामानि वर्गाः for गाय सुते... ; P. इत्यत्र for इति

10. ABBl. प्रसिद्धानि for स्पष्टानि ; P. सामसमूहरूपा for सामरूपा.

11. P. om. इति ; Bl P. स्वर्गं for स्वं.

12. B. om. द्रष्टव्यम

सा - अथ विष्णुप्रीतिसाधनमध्ययनप्रयोगमाह—इदं विष्णुरिति । 'प्रकाव्यम्' इत्यस्मिन् अन्त्यपादे 'वराहो अभ्येति'—इति वराहलिङ्गात् तद् वाराहम् । शिष्टानि प्रसिद्धानि ॥

भ - स्पष्टोऽर्थः ॥

**19. अदर्दः** (साम. i. 315) **सुष्वाणास** (साम. i. 316) **आ तू न** (साम. i. 167) **इति वर्गा मृज्यमानः सुहस्त्या** (साम. i. 517) **इति प्रथमषष्ठे चैषा वैनायकी नाम संहितैतां प्रयुञ्जन् विनायकं प्रीणाति ॥**

सा - अथ विनायकप्रीतिसाधनमध्ययनप्रयोगमाह—अदर्द इति । आदितस्त्रयः प्रतीकाः त्रयो वर्गा ग्राह्या इति शेषः । शिष्टं सुज्ञानम् ॥

भ - अदर्दः [ . . ] विनायकं प्रीणाति । अदर्दः इति वर्गः । ; 'सुष्वाणास' इति वर्गः । ; 'आ तू न' इति [वर्गः । इति] त्रयो वर्गाः । शिष्टं स्पष्टमेवेति ॥

**20. आ मन्दैरिन्द्र हरिभिः** (साम. i. 246) **आ नो विश्वासु हव्यं** (साम. i. 259) **प्र सेनानीः** (साम i. 533) **इति वर्गाः पवित्रं त** (साम. i. 565) **इति द्वे एषा स्कन्दस्य संहितैतां प्रयुञ्जन् स्कन्दं प्रीणाति ॥**

सा - अथ स्कन्दप्रीतिसाधनमध्ययनप्रयोगमाह—आ मन्द्रैरिन्द्र हरिभिरिति । स्पष्टोऽर्थः ।

भ - आ मन्द्रैः [....] स्कन्दं प्रीणाति । आ मन्द्रैरित्यादयस्त्रयो वर्गा इति ।

---

2. P. ऋचि 'पदा वराहो...' for अन्त्यपादे 'वराहो....
10. A. प्रीतिकामाः P. प्रतीकतः for प्रतीकाः ; P. om. इति शेषः.
11. RAl. वैनायकं for विनायकं.

**21.** यद्वा उ विश्पतिः (साम. i. 114) सनादग्नेऽ· (साम. i. 80) क्षन्नमीमदन्त ह्य - (साम, i. 415) भि त्रिपृष्ठम- (समा. i. 528) क्रान्तसमुद्रः (i. 529) कनिक्रन्ती - (साम i. 530) ति द्वे एषा पित्र्या नाम संहितैतां प्रयुञ्जन् पितॄन् प्रीणाति ॥ ८ ॥

सा - अथ पितृप्रीतिसाधनमध्ययनप्रयोगमाह—यद्वा उ इति । स्पष्टोऽर्थः ॥ ८ ॥

भ - यद्वा उ [....] पितॄन् प्रीणाति ॥

**22.** आस्यदघ्न उदके तिष्ठन्नक्ये नाकी इत्येतत् त्रिःसप्तकृत्वो गायेदेतत् सर्ववाचोगतसंमितमेतेन सर्वान् कामानवाप्नोति ॥

सा - अथ कृत्स्नाध्ययनप्राप्तिसाधनमध्ययनप्रोगमाह—आस्यदघ्न उदके तिष्ठन्निति । आस्यदघ्ने आस्यप्रमाणे,–'प्रमाणे द्वयसज्दघ्नञ्मात्रच्' (पा. ५. २. ३७) इति दघ्नच् प्रत्ययः—उदके तिष्ठन् एतत् उक्तं साम त्रिःसप्तकृत्वः एकविंशतिवारं गायेत् । एतद् उक्तं साम सर्ववाचोगतसंमितं सर्वेषामुक्तस्वेष्टसाधनानां सामात्मकानां वचसां गतं गमनमुच्चारणमध्ययनमित्यर्थः । तेन संमितम् । एतेन उक्तलक्षणेन साम्ना सर्वान् कामान् कमनीयान् अवाप्नोति ॥

---

10. AB सर्वा for सर्व ;

12. AB साधनाध्ययन० for साधनम ....

13. AB tr. 'प्रमाण...'...इति दघ्नच्प्रत्ययः after उदके तिष्ठन् .

14. Bl. om. उदके तिष्ठन्.

15. A. सर्वेषामुदूच्चशब्दसाधनानां P. सर्वेषामुच्चावचफलसाधनानां Bl. सर्वेषामिष्टसाधनानां for सर्वेषामुक्त...

16. P. om. सामात्मकानां.

17. Bl. संमितेनोक्तलक्षणेन for संमितम् । एतेन उक्त . . . ; BBl. adds च after ०लक्षणेन.

भ - आस्यदघ्न उदके तिष्ठन्नित्यादिरनुवाकशेषो निगदे[न]सिद्धः । सर्ववाचोगतसंमितं समस्तवाङ्मयप्राप्तिसंमितमिति । शिष्टं स्पष्टमिति ॥

**23. यश्चैवं वेद यश्चैवं वेद ॥ ९ ॥ ४ ॥**

सा - अथ वेदितुः फलमाह—**यश्चैव**मिति । चशब्दोऽनुष्ठात्रपेक्षः । न केवलमनुष्ठातुः फलम, अपि तु उक्तार्थवेदितापि **सर्वान् कामान् अवाप्नो**ति इति । अवृत्तिः समाप्त्यर्था ॥ ९ ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

भ - चतुर्थोऽनुवाकः

---

2. R. सर्वे, Al. सर्वे for सर्व.

4. P. ०ष्ठानानपेक्ष्यः for ०ष्ठात्रपेक्षः.

5. P. om. फलम् and second अपि.

6. P. adds अत्र after आवृत्तिः.

7. A om. colophon.

# पञ्चमः खण्डः

## 1. अथातः प्रायश्चित्तानाम् ।

सा - तदेवमाधानादिसहस्रसंवत्सरसत्रान्ताः स्वतन्त्रफलसाधनाश्चाध्ययनप्रयोगा उक्ताः । अथाध्यायशेषेणोच्चावच्चप्रायश्चित्तार्थप्रयोगा उच्यन्ते । तत्रादौ प्रायश्चित्तानि विधास्यामीति प्रतिजानीते—**अथात** इति । अथ यज्ञकल्पविधानानन्तरम्, अतः प्रायश्चित्तकल्पानभिधाने यतः शुद्ध्यभावः ततस्तदर्थं **प्रायश्चित्तानाम्**, आयः प्राप्तिः प्रकर्षेणायः प्रायः । विहितकर्माकरणस्य प्राप्तिरित्यर्थः । तत्प्रतीकारविषयं चित्तं चित्तिर्ज्ञानम् । तत्पूर्वानुष्ठानानि प्रायश्चित्तानि । यद्वा, प्रायो नाम विहिताकरणादिप्रतीकाररूपं तप उच्यते । तद्विषया निश्चयाः प्रायश्चित्तानि । तथा चोक्तम्—

" प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते ।
तपोनिश्चयसंयोगात् प्रायश्चित्तमितीर्यते ॥ " (अङ्गिरसस्मृति ii. 4. ।

तेषां विधानं वक्ष्यत इति शेषः ॥

भ - **अथातः** प्रायश्चित्तानां विधानं वक्ष्य इति ॥

## 2. अनादेशे मन्त्रा बलवन्तस्तपोऽन्विताः पावना भवन्ति ॥

---

1. P. BBl. सत्रार्थाः for सत्रान्ताः; P om. स्वतन्त्रफलसाधानाश्च अध्ययन.

5. P. यतः पापिनां प्रायश्चित्तकल्पनानभिधाने विध्यभावाच्छुध्यभावः अतस्तदर्थं for अतः प्रायश्चित्त...ततस्तदर्थं.

6. P. अयनमयः प्राप्तिः..., A आयनम(यः) प्राप्तिः प्रकर्षेण च आयः प्राप्तिः... Bl. अयम् अयः प्राप्तिप्रकर्षेणायः प्रायः for आयः...प्रायः

7. AB Bl. धर्म for कर्म; AB Bl. तत्प्रकारविषयं for तत्प्रतीकार. . A. चित्तिकं, P. चितिः for चित्तिः

8. ABl. ०पूर्वक for ०पूर्वं; P om. प्रायो नाम...उच्यते । तद्विषयाः.

9. A. adds प्राप्तिश्च after निश्चयाः

सा - अथ विशेषानभिधानविषये प्रायश्चित्तमाह—**अनादेश** इति । आदेशः उपदेशः । अस्येदं प्रायश्चित्तमिति यत्र विशेषोऽनभिहितः तत्र **मन्त्राः पावनाः** शोधकाः प्रायश्चित्तरूपा **भवन्ति** । कीदृशाः ? **बलवन्तः** सामर्थ्योपेताः पापक्षयलिङ्गका इत्यर्थः । **तपोऽन्विताः** तपसा कृच्छ्रादिलक्षणेन संयुक्ताः । प्रथमं तपश्चरित्वा पश्चात्परिजप्यमानाः प्रायश्चित्तार्था भवन्तीत्यर्थः ॥

म - अमुष्यैतत्प्रायश्चित्तमिति विशेषानादेशे **बलवन्तः** पापहारणलिङ्गकाः **मन्त्राः तपोऽन्विताः** कृच्छ्रादिभिस्तपोभिरन्विताः **पावनाः** पापशोधना **भवन्ती**ति ॥

## 3. आपन्नः प्रायश्चित्तं चरेत् ॥

सा - अथ प्रायश्चित्ताधिकारिणमाह—**आपन्न** इति । **आपन्नः** पापं प्राप्तः । तदपनुत्तये **प्रायश्चित्तं चरेत्** अनुतिष्ठेत् ॥

म - आनादेशे साधारणं प्रायश्चित्तनिमित्तमाह—**आपन्न** इति । प्रमादादिभिर्मार्गाद् भ्रंशो यः सा आपत्तिः । तां प्राप्त[:आ]पन्नः । स **प्रायश्चित्तं चरेत्** । पापक्षयार्थमिति ॥

## 4. अभ्यासः साम्नाᳪ शतं दशावरम् ॥ १ ॥

सा - साम्नामावृत्तिविशेषानभिधानप्रदेशे तदियत्तामाह—**अभ्यास** इति । यत्रावृत्तिविशेषो नोक्तः, पापतारतम्यादपि स नावधार्यते, तत्र प्रदेशे **साम्नां** विहितानां **शतं** शतवारावृत्तिपर्यन्तम् **अभ्यासः** कर्तव्यः । एतत् परमावधि ।

---

3. A. साधकाः for शोधकाः.

4. AB Bl. om. इत्यर्थः.

5. A. युक्ताः for संयुक्ताः; प्रायश्चित्तार्थानि for प्राय०...

6. RAl. अमुष्मै न for अमुष्यैतत्.

11. AB Bl. ०तिष्ठेत for ०तिष्ठेत्.

12. अनादेशेव for अनादेशे; ०चित्तं for ०चित्त.

16. A. आत्मना वेत्ति चेद्विशेषानभिधानप्रदेशे तदीयं तमित्याह for साम्नाम्...

18. PA om. कर्तव्यः.

कियत्प्रभृतीति चेत्, **दशावरं** दशसंख्याकावृत्तिरेवावरमधमं यस्मिन् शते तत् तथोक्तम् । सर्वथा दशवारावृत्त्यान्यूनं कुर्यादित्यर्थः ॥ १ ॥

भ - आवृत्तेरनादेशेऽर्थादिभिर्विशेषानवधारणे **साम्नां अभ्यासः** आवृत्तिः शतं दशावर कार्यः । गौरवाल्लाघवानुगमिति ॥

## 5. काहलमुक्त्वा दधिक्राव्णो अकारिषम् (साम. i. 556) इत्येतद्गायेत् ॥

सा - अथ वाचिकदोषाणां प्रायश्चित्ताध्ययनान्युच्यन्ते । तत्राश्लील-भाषणे प्रायश्चित्तमाह--काहलमिति । **काहलम्** अश्लीलं गुह्यभाषणादिकम्, **उक्त्वा** तत्प्रायश्चित्तार्थं 'दधिक्राव्ण' (साम. i. 358) **इत्येतत्** साम सकृद् **गायेत्** । आवृत्तिविशेषाश्रवणे पापलाघवात् सकृदिति गम्यते । अत्र मन्त्रे "सुरभि नो मुखा करत्" इत्यभिवदितुर्मुखस्याश्लीलवदनरूपदौर्गन्ध्य-परिहारस्य सुरभीकरणस्य च प्रतिपादनादनुरूपमेतत् साम ॥

भ - काहलमश्लीलं गुह्यभाषणा[दि]कमुक्त्वा 'दधिक्राव्णं' इति साम सकृद् गायेत् । 'ब्राह्मणमुक्त्वा त्रिः' इति वक्ष्यमाणस्य गुरुनिमित्तत्वात् ततो लघुत्वादस्य सकृदेव गम्यत इति ॥

---

1. A. संख्यावृत्तिः for संख्याकावृत्तिः

2. BlB. ०वारावृत्तेरवरं न कुर्याद् for ०वारावृत्त्यान्यूनं कुर्याद्.

3. Al. ०विशेषः for विशेष० and om. (अ)नवधारणे...गौरवाल्लाघ-वानुगमिति ।

4. R. शत for शतं; R. गौरवालाघव' for गौवाल्लाघव *See* CN.

7. P. प्रायश्चित्तानि for प्रायश्चित्त...; AB. अशील for अश्लील.

9. P. कृत्वा for तत्.

10. AB. अपि for पाप.; P. अवगम्यते for गम्यते ; P. अत्रान्तः for अत्र मन्त्रे.

11. P. ०वदति for ०वदितुः; B. वादन for वदन A. दौर्गत्य for दौर्गन्ध्य.

12. A. परिहाराय, P. परिहारेण for परिहारस्य; A. om. सुरभी...साम ॥ P. सौरभ्यस्य प्रार्थ्यमाणत्वात् वचिकदोषप्रायश्चित्तार्थत्वमस्य युक्तम् ॥ for सुरभी... साम ॥

14. RAl. गीयेत् for गायेद्.

## 6. परुषमुक्त्वेदं विष्णुर्विचक्रम इति ॥

**सा** - अथ पुरुषमात्रस्य निष्ठुरभाषणे प्रायश्चित्तमाह—**परुषमुक्त्वेति** । ब्राह्मणगुर्वादिना विषयभेदस्य विधास्यमानत्वात् तद्व्यतिरिक्तं पुरुषं **परुषमुक्त्वा** निष्ठुरं भाषित्वा **'इदं विष्णुः'** (साम. i. 222) इत्येतद् गायेत् । उत्तरत्र ब्राह्मणवादे आवृत्तित्रित्वविधानात् तदपेक्षयास्य निकृष्टत्वादेकवारावृत्तिरिति गम्यते ॥

**भ** - **परुषमिति** । यस्य कस्यापि **परुषं** वाक्यमुक्त्वा **'इदं विष्णुः'** (साम. i. 222) इति साम सकृद् गायेत् ॥

## 7. ब्राह्मणमुक्त्वा त्रिः ॥

**सा** - अथ ब्राह्मणवादे प्रायश्चित्तमाह—**ब्राह्मणमिति** । **ब्राह्मणं** निष्ठुरम् **उक्त्वा 'इदं विष्णुः'** (साम. i. 222) इत्येतदेव **त्रिः** त्रिवारं गायेत् ॥

**भ** - **ब्राह्मणमिति** । **ब्राह्मणं** प्रति परुषमुक्त्वा इदं विष्णुरिति त्रिर्गायेदिति ॥

## 8. भ्रातरं मातुलं पितृव्यमिति गुरुजातीयान् प्रसाद्य पक्षिणीꣳ रात्रिमुपोष्य तवाहꣳ सोम रारणेति(साम. i. 516) प्रथममेकविꣳशतिकृत्वः ॥

---

1. My RAl Bl. पुरुषम् for परुषम्.

3. P. ०गुर्वादीनां विशेषस्याभिधास्यमानत्वात् for ०गुर्वादिना.... विधास्यमानत्वात्; B. has only up to गुर्वादिना विषयहेतु (with हेतु for भेदस्य) and om. विधास्यमानत्वात्. . . आवृत्तित्रित्वविधानात्.

4. P. इतरत्र for उत्तरत्र.

5. A om. ब्राह्मणवादे...गम्यते ॥; P. दारुण for ब्राह्मण.

7. R. पुरुषं for परुषं; Al om. परुषं.

10. A om. अथ.

11. AB om. त्रिः.

12. RAl. पुरुषं for परुषं.

सा - अथ भ्रात्रादीनां वादे प्रायश्चित्तमाह—भ्रातरमिति । भ्राता अग्रजः । मातुलः मातुर्भ्राता । पितृव्यः पितुर्भ्राता । इतिशब्दः प्रकारवचनः । एतान् एवंप्रकारानन्यांश्च श्वशुरादीन् गुरुजातीयान्, गुरुः पिता, तज्जातीयान् । तत्समानगौरवानित्यर्थः । तान्निष्ठुरमुक्त्वा प्रसाद्य तानेव क्षमाप्य (!) पक्षिणीम् उभयतोऽपि अहर्लक्षणपक्षद्वयोपेतां रात्रिमुपोष्य 'तवाहं सोम' (साम. i. 516) इत्यस्याः प्रथमं साम एकविंशतिकृत्व आवर्तयेत् ॥

भ - भ्रातरमिति । भ्रातरं ज्येष्ठं मातुलं मातुर्भ्रातरं पितृव्यं पितुर्भ्रातरम् । इतिशब्दः प्रकारवचनः । एवंप्रकारान् गुरुजातीयान् गुरुप्रकारान् श्वशुरादींश्च । परुषमुक्त्वा [ता]न् प्रसाद्य पक्षिणीमुभयतोऽहोरात्राभ्यां युक्तां रात्रिमध्यर्धमहोरात्रमित्यर्थः । शिष्टं स्पष्टमिति ॥

**9. उपाध्यायं मातरं पितरमित्येतेषु त्रिरात्रमुपवसन्नेतस्यैवान्त्यम् ॥**

सा - अथोपाध्यायादीनां परुषवचने प्रायश्चित्तमाह —उपाध्यायमिति । उपाध्यायशब्दो महागुरूणां [पितृशब्दः] मातामहादीनामुपलक्षणार्थः । एतान् मातरं पितरं च इत्येतेषु विषयभूतेष्वप्रियमाचरित्वा त्रिरात्रमुपवसन् उपोष्य एतस्यैव तवाहमिति वर्गस्य अन्त्यं साम एकविंशतिकृत्वो गायेदित्यनुषज्यते ॥

---

2. A. अग्रजन्मा for अग्रजः ; P. मातृभ्राता...पितृभ्राता for मातुः... पितुः...

3. P. तत् Bl. एतत् for एवं.

4. P. तत्समगौरवात्, A. तत्समानाति० for तत्समान०; क्षमाप्य See CN. Bl. समाप्य.

5. AB. उभयतो जहल्लक्षण for उभयतोऽ...

9. RAl. पुरुषम् for परुषम् .

14. P. महागुरूणामाचार्यपितामहादीनाम् for महागुरूणाम् ... ; P. एतां for एतान् .

15. A. विषयभूतेषु त्रिरात्रमुपवसन् पूर्वं प्रियमाचरित्वा उपोष्य, P. विषयेषु भ्रातृव्यवदप्रियमाचरित्वा त्रिरात्रमुपवसेत् उपोष्य for विषयभूतेषु...उपोष्य.

भ - **उपाध्याय**मिति । उपाध्यायशब्दो महागुरूणामाचार्यप्रभृतीनां पितृशब्दो मातामहा[दी]नामुपलक्षणार्थः । एतेषु विषयेषु **त्रिरात्रमुपवसन्** उपोष्येत्यर्थः । उपवासान्ते **एतस्य 'तवाहं सोम रारण'** (सा॰ i. 561) इति वर्गस्यान्त्यमेकविंशतिकृत्वो गायेदिति । अथापरमुपोष्येत्यवचनादुपवसन्निति लक्षणे सकृत्प्रयोगः । त्रिरात्रमेतद्गायेत् तस्मिन् कालेऽनश्नन्निति ॥

## 10. अनध्याप्यमध्याप्य सप्तरात्रमुपवसन् सदा गावः शुचयो विश्वधायसः इत्येतद्गायेत् ॥

सा - अथाध्ययनानर्हाध्यापने प्रायश्चित्तमाह—**अनध्याप्यमिति** । शास्त्रनिषिद्धः कुण्डगोलकादिः अनध्याप्यः । तम् अध्याप्य **सप्तरात्रमुपवसन्** उपोष्येत्यर्थः । तदन्ते **'सदा गाव'** (साम. i. 442) **इति एतत्** साम एकविंशतिकृत्वो गायेत् । केचनात्र पूर्वत्र च त्रिरात्रनियमं उपवसन्निति शतृश्रवणाद्विहितोपवासदिवसेष्वेव नित्यनैमित्तिकाविरोधेन विहिते सामनी गातव्ये इत्याहुः ॥

भ - **अनध्याप्य**मिति । सप्तदिनान्य[न]श्नन् तेषु कालेषु एव [एतद्] गायेत् नित्यनैमित्तिककर्माविरोधेनेति ॥

## 11. अयाज्ययाजने दक्षिणास्त्यक्त्वा मासं चतुर्थे काले भुञ्जानः कानी इत्येतद्गायेत् ॥

सा - अथायाज्ययाजने प्रायश्चित्तमाह—**अयाज्येति** । **अयाज्यः** शास्त्रनिषिद्धत्वेन यष्टुमनर्हः । तथाविधं ज्ञात्वैव दक्षिणार्थं याजयति । पूर्वमज्ञात्वा

---

1. RAl. महामहागुरूणां. for महागुरूणाम् .
2. RAl. विशेषयेषु for विषयेषु.
8. AB. om. अथ.
9. ABBl. om. उपवसन्.
10. ABBl. इत्यर्थः.
11. B om. केचनात्र; A केचिन्नात्र for केचानात्र; A om. पूर्वत्र च ; P पूर्वोक्तनियमे for पूर्वत्र; P om. त्रिरात्रिनियंमे.
12. BBl. om. शतृ ; P शब्द for शतृ; A. रक्षिते Bl. विवक्षिते for विहिते.
17. My TAS कानीत्येतत् for कानी इत्येतत् .
19. A. शास्त्रे निषिद्धेन, BBl. शास्त्रनिषिद्धः for शास्त्र...; P. याजयितुं for यष्टुम्; P. तथापि अयशियं यो ज्ञात्वैन for तथाविध...; Bl. याजयन् for याजयति.

याजयित्वा पश्चाल्लोकनिन्दया वा जानाति । स उभयरूपो याजकः अयाज्ययाजनदोषापनुत्तये स्वीकृता गवादिदक्षिणास्त्यक्त्वा **मासं** मासपूर्तिपर्यन्तं **चतुर्थे काले भुञ्जानः** प्रथमदिवस उपवासं कृत्वा द्वितीयदिवसरात्रिश्चतुर्थः कालः । तस्मिन् क्षारादिपरित्यागेन नियतं भोजनं कुर्वन् **'कानी'** (साम. i. 530; स्वराः ५ । पर्वाणि १४ । विकाराः ११)—इत्येतत् साम **गायेत्** नित्यकर्माविरोधेनेति ॥

**भ - अयाज्ययाजने दक्षिणास्त्यक्त्वेति** । अस्मिन् काले अयाजितव्यो मया याजित इति बुद्धे तदानीं दक्षिणां त्यजेत् । यदायाज्य इति जानन्नेव लोभादिना याजयित्वा पश्चादनुशयीत तदापि दक्षिणां त्यजेत् । तच्छा-(तस्य शा?)स्त्र[निषिद्धत्वात्] । शिष्टं स्पष्टमिति ॥

**12. अमेध्यदर्शने ये ते पन्था अधो दिव इति । तथामेध्यघ्राणे ॥**

**सा** - अथामेध्यदर्शनघ्राणयोः प्रायश्चित्तमाह—**अमेध्येति** । मार्गे गच्छन्नकामतः **अमेध्यदर्शने अमेध्यघ्राणे** च संभाविते **'ये ते पन्था अधो दिवः'** (साम. i. 172) इति एतत्सकृद् गायेत् । कामतश्चेत् त्रिवारं गायेदित्यूहेत ।

**भ - अमेध्येति** । अमेध्यस्य [अकामा]द् दर्शने [स]कृदेतद्गायेदिति । **तथामेध्यघ्राणे** अकामेनामेध्यस्य घ्राणे **'ये ते पन्थाः'** (साम. i. 172) इति
9 सकृद्गायेदिति । कामकारकृतयोर्दर्शनघ्राणयोस्त्रिर्गायेदित्यूह्यमिति ॥

---

1. B. ०रूपकः for ०रूपः.
2. AB. संपूर्ति for पूर्ति.
3. P. ०दिने for ०दिवसे.
4. P. क्षारलवण for क्षारादि.
7. RAl. अपा (या R) स्तव्यः for अयाजितव्यः.
8. Al. बुध्येत for बुद्धे; RAl. यदाज्ययाज्यः for यदायाज्यः.
13. ABBl. om. second अमेध्य; AB. घ्राणने for घ्राणे.
14. P. कामतश्च for कामतश्चेत्.
15. AB. इत्याद्यूहेत् for इत्यूहेत.
16. RAl. पुरुषाददर्शने for अकामाद् दर्शने.

**13. अभोज्यभोजनेऽमेध्यप्राशने वा निष्पुरीषीभावस्त्रिरात्रावरं तूपवसन्नेतो न्विन्द्र९ स्तवाम शुद्धम् इति पूर्वं सदा सहस्रकृत्व आवर्तयन् ।**

सा - अथाभोज्यभोजनामेध्यप्राशनयोः प्रायश्चित्तमाह—**अभोज्येति** । **अभोज्यम्** उच्छिष्टादिनिन्दितान्नं तस्य **भोजने अमेध्यं** मूत्रपुरीषादि, तस्य **प्राशने वा** संभाविते । एतद्दुष्टान्नस्याप्युपलक्षणम् । **निष्पुरीषीभावः** तदुभयापगमाय विरेकादि कार्यमित्यर्थः । तथा कृत्वा **त्रिरात्रावरं** त्रिरात्रमेवावरं जघन्यं यस्मिन्, त्रिरात्रादनु, वरत्वात्ततोऽधिकं वा भुक्तप्राशितानुगुण्येन यथाशक्ति **उपवसन्** तेषु दिवसेषु सदा **'एतो न्विन्द्रम्'** (साम. i. 350) **इति** एतस्य वर्गस्य **पूर्वं** प्रथमं **सहस्रकृत्वः आवर्तयन्** शुद्धो भवतीत्यर्थः ॥

भ - अभोज्येति । **अभोज्यस्या**न्नस्योच्छिष्टादेव[ ा] भोजने **अमेध्यस्य** मूत्रपुरीषादेर्भोजने **वा निष्पुरीषीभावः** निरोधेन पुरीषमपनेतव्यम् । ततस्त्रि**रात्रावरं उपवसन्** भुक्तप्राशितानुगुण्येन त्रिरात्रं त[द]नु [चतू]रात्रं पञ्चरात्रमित्यादिषु उपवसन् **सदा** प्रत्यहं **सहस्रकृत्व** आवर्तयन् **'एतो न्विन्द्र९ स्तवाम शुद्धम्'** (साम. i. 350) इति वर्गस्य **पूर्वं** प्रथमं गायेदिति ॥

---

3. RAl. आवर्तयेत् for आवर्तयन्.

5. P. उच्छिष्टं निन्दितान्नं च, B. उच्छिष्टादिनिन्दितान्नस्य for उच्छिष्टादि...

6. ABBl. tr. एतद्दुष्ट...लक्षणम् after निष्पुरीषीभावः; Bl. दृष्टान्नस्य for दुष्टान्नस्य.

7. A. विरेचकादिः for विरेकादि; P om. इत्यर्थः.

8. A. त्रिरात्रावरमन्यूनयित्वा ततोऽधिकं, P. काले तदनु, ततोऽधिकं Bl. त्रिरात्रे तदनुपरत्वात् ततोऽधिकं for त्रिरात्रादनु...ऽधिकं; P. यथारात्रि for यथाशक्ति.

9. A. एषु for तेषु,

12. R. अपनेतव्यः (व्ये Al.) for अपनेतव्यम्.

13. RAl. भुक्तप्राशितमाचातुर्गुण्येन for भुक्त...गुण्येन.

14. Al. ०रात्रादिषु for ०रात्रमित्यादिषु.

**14.** बहून्यप्युपपतनीयानि कृत्वा त्रिभिरनश्नत्पारायणैः पूतो भवति ॥ २ ॥

सा - अथोपपातकप्रायश्चित्तमाह—बहूनीति । उपपतनीयानि उपपातकानि गोवधव्रात्यतादीनि । तानि बहूनि कृत्वापि अनश्नता उपवसता कृतैः पारायणैः अनश्नत्पारायणैः, तैश्च त्रिभिः कृत्स्नवेदाध्ययनलक्षणैः पूतः शुद्धो भवति ॥ २ ॥

भ - बहूनीति । उपपतनीयानि उपपातकानि गोहत्यादीनि बहून्यपि कृत्वा त्रिभिरनश्नत्पारायणैः अनश्नता कृतानि पारायणानि अनश्नत्पारायणानि तैस्त्रिभिरविच्छेदेन कृतैः पूतो भवतीति ॥ २ ॥

**15.** सुरां पीत्वा संवत्सरमष्टमे काले भुञ्जानो यत्पाण्योः संभवेदवाङ्नाभ्यूर्ध्वंजानु बर्हितस्त्रिरह्न उपस्पृशंस्तथा रात्रौ, स्थानासनाभ्यां [तिष्ठेदहनि रात्रावासीत ।] पवित्रं त इत्युत्तरेणाहोरात्राणि जपन् ग्रामद्वारे स्थानासनभोजनानि यत्र लभेत् तत्र वसेन्न प्रवसेत् । स्वकर्मणाभिभाषेत । चतुर्णां ब्राह्मणानामग्रतः प्राश्नीयात् । ग्रामद्वारस्यैवाग्रत आवश्यकायाभिक्रामेत् । अतोऽन्यथा शङ्क्यम् । पूर्णे संवत्सरे तैलं लवणं क्षुरमग्निं गां बीजानीत्यालब्धवन्तं ब्राह्मणा ब्रूयुश्चरितं तवेत्योम् भो इति ब्रूयात् सप्तावरान् सप्त परान् हन्त्यनृतं चरितं तव सुचरितं तवेत्योम् भो इति ब्रूयात् ।

---

1. AB PM My. अनश्नन् for अनश्नत्

4. P. कृत्वा 'अनश्नन्' 'त्रिभिः पारायणैः' त्रिवारपारायणैः 'पूतो' भवतीति ॥ for कृत्वापि...शुद्धो भवति ॥

5. A om. अनश्नत्पारायणैः

11. PV. परिहितः for बर्हितः

12. तिष्ठेदहनि *See* CN.

19. My. om. तव सुचरितं

**अत ऊर्ध्वं केशश्मश्रुलोमनखानि वापयित्वाऽहतं वसनं परिधाय ब्राह्मणान् स्वस्ति वाचयित्वा पूतो भवति ॥**

सा - अथ सुरापाने प्रायश्चित्तमाह—सुरामिति । सुरां सकृत् पीत्वा तत्प्रायश्चित्ताय संवत्सरं संवत्सरपूर्तिपर्यन्तमष्टमे काले भुञ्जानः क्षारलवणादि-वर्जनेन भोजनं कुर्वन् । अन्नस्य चेयत्तोच्यते—पाण्योः उभयोर्हस्तयो-र्यद् यावदन्नं संभवेत् तावदेव भुञ्जानः । अवाङ्नाभि नाभेरधस्तात्, उर्ध्वजानु जान्वोरुपरि बर्हितः आच्छादितः लज्जापरिहारार्थं गोपनीयं प्रदेशमाच्छादयेत् । न तु शीतादिवारणायोत्तरीयादिकमपि दध्यादित्यर्थः । अह्नः अहनि । त्रिरुपस्पृशन् त्रिषवणस्नानं कुर्वन् । तथा रात्रावपि कुर्वन् । स्थानासनाभ्यां नियताभ्यां युक्तः सन् । तिष्ठेदहनि रात्रावासीत न कदाचिच्छयीतेत्यर्थः । 'पवित्रं ते' (साम॰ i. ५६५) इति द्वयोरुत्तरेण साम्ना अहोरात्राणि सर्वदा जपन् जपग्रहणात् उपांशु गायन् । ग्रामद्वारे ग्रामनिर्गमनप्रदेशे कुट्यादि कृत्वा वसेत् । शीतातपवर्षाणि सहेतेत्यवचनात् तत्परिहाराय कुट्यादिरर्थसिद्धः । स्थानासनभोजनानि यत्र ग्रामे लभेत् लभते तत्र वसेत् । न प्रवसेत् प्रवासं ग्रामान्तरगमनं न कुर्यात् । स्वकर्मणा स्वानुष्ठितेन सुरापाणेन कर्मणा अभिभाषेत । अन्यान् प्रति स्वकृतं पापं प्रख्यापयेदित्यर्थः ।

---

1. My the line अतः...नखानि is very corrupt; P. रोम for लोम.

4. A. यत् for तत; AB om. संवत्सरं; ABBl. संपूर्ति for पूर्ति.

5. P. वर्जनं for वर्जनेन; Bl. अन्नमस्य for अन्नस्य च; P om. हस्तयोः.

7. PBl. परिहितः A. पर्हितः for बर्हितः.

8. Bl. ननु for न तु; B. वारणम् for वारणाय.

10. A. संतिष्ठेत् for सन् । तिष्ठेत्.

11. P. कदापि for कदाचित्; P. पवित्रवन्त इति for पवित्रं त इति.

13. A. कुणीकृत्वा, BBl. कुटिं कृत्वा for कुट्यादि कृत्वा; ABBl. शीतवातवर्षाणि सेवेत for शीतातप. . .

14. A. ग्रामादीन्, B. द्रुमादिः for कुट्यादिः.

15. P. om. प्रवासं; A. विहितेन for स्वानुष्ठितेन.

16. A. सुरापेण for सुरापानेन; P adds, वदेत् after अभिभाषेत; P. कृतं for स्वकृतं.

कृत्वा पापं न गूहेत गूह्यमानं विवर्धते।

(आङ्गिरसस्मृति. I. 2. 4)

पापं प्रख्यापयेत् पापी.... .... ....।।

(पाराशरस्मृति. ?)

इत्यादिस्मरणात् । तथा ब्रह्महत्याप्रायश्चित्तेऽपि संकीर्तनमुक्तम्—

शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ।

(याज्ञ. स्मृ. iii. 243)

इति 'अष्टमे काले भुञ्जानः यत्पाण्योः संभवेत्' इत्युक्तं भोजनं **चतुर्णां ब्राह्मणानामग्रतः प्राश्नीयात्**, तदपि **ग्रामद्वारस्यैवाग्रतः** कुर्यात् । नैकाकी कदाचिदपि भुञ्जीतेत्यर्थः । **आवश्यकाय** अवश्यकर्तव्याय मूत्रपुरीषोत्सर्गाय **अभिक्रामेत्** स्थानाद्विचलेत् । अन्यथा नाभिक्रामेत् । तदेवाह—**अतोऽन्यथा** मूत्रपुरीषोत्सर्गादन्यथा गमने सति **शङ्क्यं** तद्गमनं कामचराय कृतमित्यन्यैः शङ्कनीयं भवति । **पूर्णे संवत्सरे** उक्तनियमेन संवत्सरे संपूर्णे सति तैलादिवीजान्तानि षट् द्रव्याणि **आलब्धवन्तं** संपादितवन्तमेनं **ब्राह्मणाः** अपरिमिता ब्रूयुः । किमिति? तदुच्यते—**चरितं तवेति** 'त्वयाचरणीयं व्रतं किं सम्यक् चरितम्'? इति तैश्च पृष्टः स **ओं भो** इति प्रति ब्रूयात् । ओमित्यङ्गीकारे । हे महान्तः! युष्माभिर्यत्पृष्टं तत्तथा सम्यक् कृतमिति तस्यार्थः । एवमुक्तवन्तं पुनर्ब्राह्मणा ब्रूयुः । किमिति? तदुच्यते—तव चरितं प्रायश्चित्ताचरणं यदि **अनृतं** उक्तनियमरहितं चेत् तर्हि **सप्तावरान्** अधमान् सप्तपुत्रपौत्रादिसंतानान्, **सप्त परान्** उत्कृष्टान् पितृपितामहादीन्, **हन्ति** नाशयति । अतः तव चरितं किं

1. P. तु for वि.
2. P. पापात् for पापी.
4. P. ०कपालजीवी for ०कपाली ध्वजवान्; B. चेरयेत्, P. चोदयन for वेदयन्.
6. P. adds तदष्टमे काले after भोजनं; A. प्राशननियमात् for प्राश्नीयात्
9. AB. मूत्रपुरीषादीनन्यथा Bl. मूत्रपुरीषादन्यथा for मूत्र०
11. PA. पूर्णे for संपूर्णे; P.om. सति; AB. ओषधिद्रव्याणि for षट् द्रव्याणि
13. P. चरितवान् for चरितम्;
14. P. तैरुक्तः स च, BBl. तैश्च पृष्टश्च for तैश्च पृष्टः सः A om. पृष्टः स
17. P. om. second सप्त.
18. A. वरान् for परान्.

सुचरितम् इति तैः पृष्टः स पुनः ओं भो इति ब्रूयात् । अत ऊर्ध्वम् उक्तशपथपूर्वकसंभाषणादनन्तरं केशश्मश्रुलोमनखानि नियमकाले प्रवृद्धानि वापयित्वा छेदयित्वा अहतं नूतनं वसनं वस्त्रं परिधाय परित आच्छाद्य ब्राह्मणान् स्वस्ति वाचयित्वा पूत उक्तदोषाद्विमुक्तो भवति ॥

भ - सुरां पीत्वा संवत्सरमष्टमे काले भुञ्जान इत्यारभ्य ब्राह्मणान् स्वस्ति वाचयित्वा पूतो भवतीत्यन्तेन सुरापानप्रायश्चित्तं विधीयते । यत् यावदन्नं पाण्योः द्वयोः संभवेदादीयमानं तावदष्टमे काले भुञ्जानः संवत्सरं व्रतं चरन् अवाङ्नाभि नाभेरधस्ताद् [ऊर्ध्वं]जानु [जान्वोः]उपरि [परि]हित आच्छादित उत्तरेणोत्तरीयं वर्जयेत् । अह्नः अहनि त्रिरुपस्पृशन् स्नानं कुर्वन् [स]सवनं तथा रात्रौ त्रिरुपस्पृशन् । स्थानासनाभ्यां तिष्ठेदहनि रात्रावसीत न कदाचि[च्छ]यीत । 'पवित्रं ते' (साम. i. ५६५) इति द्वयोरुत्तरेण साम्ना जपन् जपं निर्वर्तयन् । जपन्निति वचनादुपांशु जपन्निति गम्यते । अहोरात्राणि सर्वदा जपति । ग्रामद्वारे ग्रामान्निर्गमनदेशे वसेत् । कुटिं कृत्वेति सिध्यत्यर्थादेव शीतवर्षातप[ान्] सहेतेत्यवचनात् । यत्र वसन्नसौ स्थानासनभोजनानि लभेत् । [तत्र]ग्रामद्वारे वसेत । न प्रवसेत् ग्रामान्तरं न गच्छेत् । एकस्मिन् ग्रामे वसेदित्यर्थः । स्वकर्मणा कीर्त्यमानेन परैरभिभाषेत सुरापोऽहमस्मीति । भोजनकाले 'यत्पाण्योः संभवेत्तदष्टमे काले भुञ्जानः' इत्युक्तं प्राशनम् । [च]तुर्णां ब्राह्मणानामग्रतः प्राश्नीयान्नैकाकी भुञ्जीत । तदपि प्राशनं ग्रामद्वारस्यैवाग्रतः समये कुर्यात् । आवश्यकाय मूत्रपुरीषाद्यर्थमेव ग्रामद्वाराद् अभिक्रामेत् । अतोऽन्यथाभिक्रमणे शङ्क्यम् । स्वच्छन्देन

---

1. P. adds तथा after तैः.

2. A. कृततपः पूर्वक० for उक्त . . . ; Bl om. उक्त . . . ; P. tr. केश. . .नखानि after प्रवृद्धानि.

3. P. om. छेदयित्वा ; P. om. वसनं; B. om. परितः.

6. RAl. अनेन for अन्तेन.

7. R. यावदन्तं for यावदन्नं ; RAl. वा चदष्टमे for तावदष्टमे.

9. RAl. आच्छादितोत्तरीणोत्तरीयं for आच्छादितः....

18. RAl. तुव (प Al)र्वणां for चतुर्णां.

19. RAl. समायं for समये.

20. RAl. अतोऽर्था (ऽन्यार्था R.)भिक्रमेण for अतोऽ०...

ग्रामधर्मार्थं गच्छतीति शङ्केत । **पूर्णे संवत्सरे** तैलादिबीजान्तानि षडालभेत । ब्राह्मणानां समितौ तं **ब्राह्मणाः** समवेता **ब्रूयुः** पृच्छेयुः किं यथावच्चरितं व्रतं **तवेति । ओं भो इति ब्रूयात्** । यदि सुचरितमिति शेषः । यदि तव **चरितमनृतं** श्रद्धादिरहितं तदा सति तदनृतं चरितं **सुचरितं** सम्यक् चरितं **तवेति । ओं भो इति ब्रूयात्** । सुचरितमिति शेषः । शिष्टं स्पष्टमिति ।

**एतेन कल्पेन भ्रूणहा पूर्वमेतेन ब्रह्महा शुद्धाशुद्धीयमुत्तरमेतेन सुवर्णस्तेनोऽभित्रिपृष्ठमित्यभि त्रिपृष्ठमिति ॥३॥ ५**

**सा** - उक्तं प्रायश्चित्तं भ्रूणहत्याब्रह्महत्यासुवर्णस्तेयादिमहापातकेषु अतिदिशति—**एतेनेति । एतेन** संवत्सरमष्टमे काले इत्यादिना सुरापाणोक्तेन **कल्पेन** नियमविशेषेण **भ्रूणहा** भ्रूणस्य विद्यावृत्त्यादिभिः श्रेष्ठस्य ब्राह्मणस्य, ब्राह्मणगर्भस्य वा हन्ता पूतो भवतीति शेषः । जपे तु विशेषः—**पूर्वं** 'पवित्रं ते' (साम. i. 565) इत्येतत्सामाहोरात्राणि जपेत् । सुरापकल्पे 'पवित्रं त इत्युत्तरेण' इत्युक्तत्वादत्र **पूर्व**मिति प्रथमं 'पवित्रं ते' इत्येतद् गृह्यते । तथा **एतेन** उक्तेनैव कल्पेन **ब्रह्महा** ब्राह्मणजातिमात्रस्य हन्ता, पूतो भवति । "शुद्धाशुद्धीय-" नामकस्य जपार्थत्वमित्येतावान् विशेषः । तथा **एतेन** कल्पेन सुरापस्य प्रतिपादितेनैव कल्पेन **सुवर्णस्तेनः** ब्राह्मणव्यतिरिक्तस्य सुवर्णस्य हर्ता शुद्धो भवति । **अभि त्रिपृष्ठम्** (साम. i. 528) **इति** एतत्साम जप्तव्यमित्येतावान् विशेषः ॥

---

1. RAl. तैलादीदनिषीजांगतानि for तैलादि...

2. R. सस्मितौ, Al संमितौ for समितौ ; RAl. ब्राह्मणासः for ब्राह्मणाः RAl. इच्छेयुः for पृच्छेयुः.

4. RAl. चरि[तं] तव for second चरितं

7. B. adds कल्पेन after second एतेन

9. Bl. om. ०ब्रह्महत्या० ; P. ०स्तेयेषु for स्तेयादि.

11. A. भ्रूणहत्याविद्याद्दढादिभिः, B. भ्रूणहाविद्याद्दथादिभिः for भ्रूणस्य विद्या. . . ; Bl. अविद्यावृत्तादिभिः for विद्या...

13. PB om. इति, A. om. त इत्युत्तरेण ; Bl. इत्युक्तम for इत्युत्तरेण.

15. P. उत्तरं शुद्धाशुद्धीयं साम च पदार्थम् for शुद्धा . . . जपार्थत्वम् .

16. P. adds वा before विशेषः ; P. चोदितेन for प्रति. . .

17. हर्ता for आदाता.

18. AB add वृषणं after ०त्रिपृष्ठम् .

आवृत्तिः समाप्तिद्योतनार्था ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये पञ्चमः खण्डः ॥ ३ ॥

भ - अथ सुरापप्रायश्चित्तं भ्रूणघ्नेऽतिदिशति—**एतेन कल्पेन भ्रूणहा पूर्वमेतेन ब्रह्महा** पूतो भवतीति शेषः । जपे तु विशेषोऽस्तीत्याह—पवित्रं त इति **पूर्वम्** अहोरात्राणि जपेदिति । भ्रूणो विद्यावृत्त्यादिभिः श्रेष्ठो ब्राह्मणः ब्राह्मणगभ[र्ो वा] तस्य हन्ता भ्रूणहेति । **एतेन ब्रह्महा शुद्धाशुद्धीयमुत्तरम् । एतेन** कल्पेन **ब्रह्महा** पूतो भवति । शुद्धाशुद्धीययोर्द्वयोरुत्तरं [?] इत्यपरं जपेत् 'पवित्रं ते' इति साम्नः स्थान इति । एतेन सुवर्णस्तेनोऽभित्रिपृष्ठमिति निगदसिद्धमिति ॥

॥ इति पञ्चमोऽनुवाकः ॥

---

2. B. om. श्रीसायणा०...वेदार्थप्रकाशे A. om. the whole colophon except पञ्चमः खण्डः.

5. Al. ब्रह्मकेण भ्रणहा for ब्रह्महा; RAl. जपन् for जपे तु.

6. Al. क्रमेणोविधाव आदिभिः, R ब्रूणे विद्यावन्नादिभिः for भ्रणो०.,

7. तस्य हन्ता *See* CN.

# षष्ठः खण्डः

1. ब्राह्मणस्वꣳ हृत्वा मासमुदके वासश्चतुर्थे काले भोजनं दिवा बहिरा स्याद् व्रतान्ते शुक्रं ते अन्यद्यजतं ते अन्यदित्येतद्गायेत् ॥

सा - सुवर्णस्तेये प्रायश्चित्तमुक्तम् । अथ ब्राह्मणस्य सुवर्णव्यतिरिक्त-द्रव्यहरणे प्रायश्चित्तमाह—**ब्राह्मणस्व**मिति । **ब्राह्मणस्वं** ब्राह्मणस्य गवादिद्रव्यं **हृत्वा मासं** मासपूर्तिपर्यन्तमुदकसमीपे **वासः** कर्तव्यः । साक्षा-दुदके मासपर्यन्तं वस्तुमशक्यत्वात् । तथा **चतुर्थे काले भोजनम्** । तत्प्रकारः प्रदर्श्यते—**दिवेति** । दिवा भुक्त्वा ततो भोजनकालपरिगणनायां चतुर्थः कालः अपेद्यू रात्रौ भवति ।

"सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम्"

(म. स्मृ. ii. 52 [6])

इति अभिहितत्वात् दिवा रात्रिश्चैकैको भोजनकाल इति मन्तव्यः । एवं भुक्तरात्रिकालमादिमं कृत्वा तत्तृतीयेऽहनि दिवा चतुर्थः कालः । एवं मासपर्यन्तं नियमं चरेत् । आकारो विकल्पवाचकस्य वेत्यस्य समानार्थः । स च विकल्पो

---

2. T. भुञ्जान for भोजनं; My om. यजतं ते अन्यद्.

4. Bl. om. सुवर्ण...उक्तम् । ; AB. ०स्तेयप्रायश्चित्तम् for ०स्तेये... ; P. हिरण्य० for सुवर्ण०.

6. P. संपूर्ति for पूर्ति; Bl. om. पूर्ति.

7. AB भोजनप्रकारः for भोजनम् । तत्प्रकारः.

8. P. ०कालात् for ०काल.

12. PA om. तत्.

13. P. आचरेत् for चरेत्; PBl. वाचकः for ०वाचकस्य; PB, वेत्यर्थसमानार्थ; Bl. वेत्यर्थः for वेत्यस्य समानार्थः.

जलसमीपापेक्षया । **दिवा बहिरा स्याद्** ग्रामाद्बहिर्यत्र कुत्रापि वासो भवेत् । जलसमीपे वेत्यर्थः । **'उदके वासः'** इत्यनेनैव ग्रामाद्बहिर्वासे सिद्धे **'दिवा बहिरा स्यात्'** इति पुनर्विधानेन दिवा बहिर्वा जलसमीपे वा स्यात् । रात्रौ तु ग्रामे एवेत्यवधार्यते एवं मासं व्रतं समाप्य तदन्ते **'शुक्रं ते अन्यद्'** (साम. i. 75) इत्येतत् साम **गायेत्** । आवृत्त्यनुपदेशाच्छतं दशावरमित्युपादेयमिति मन्तव्यम ॥

**भ** - **ब्राह्मणस्व**मिति । **ब्राह्मणस्वं** ब्राह्मणस्य सुवर्णव्यतिरिक्तं **हृत्वा** व्रतान्ते **'शुक्रं ते अन्यद्यजतं ते अन्यद्'** (साम. i. 75) **इत्येतद्गायेद्** इति । सामेदं शतं दशावरं गायेत् । तस्य व्रतानि—**मासमुदके** उदकस्य समीपे **वासश्चतुर्थे काले भोजन**मिति । **दिवा** भुक्त्वा ततो भोजनं **चतुर्थे काले**ऽपरेद्युः रात्रौ । ततस्तृतीयेऽहनि दिवा भोजनमायाति । यदा दिवा भोजनमापद्यते तदा अबहिरा स्यात् । अतश्च संभवे सत्येतद्भोजनं स्यादिति । **अथवा** 'मासमुदके वासः' इत्युक्तेन विकल्पः । दिवा च ग्रामाद्बहिरा स्यात् । वसेदित्यर्थः । आकारो वाशब्दस्यार्थे वर्तत इति ॥

**2. अन्यस्य हृत्वा कृच्छ्रं चरन्नयꣳ सहस्रमानव इति द्वितीयम् ॥ १ ॥**

**सा** - ब्राह्मणव्यतिरिक्तस्य द्रव्यापहारे प्रायश्चित्तमाह—**अन्यस्येति** । **अन्यस्य** ब्राह्मणव्यतिरिक्तस्य कस्यचिद्वस्त्रादिधनं **हृत्वा** तदपनुत्तये **कृच्छ्रं** प्रथमोक्तं प्राजापत्यं **चरन्** तेष्वाचरणदिवसेषु **'अयं सहस्रमानवः'** (साम. i. 458) इत्यस्य **द्वितीयं** साम गायेत् ।

---

1. P. जलसमीपापेक्षः for जलसमीपापेक्षया.; P. adds अह्नि after दिवा; AB om. कुत्र; Bl. om. यत्र कुत्रापि.
2. A. om. वा.
4. AB एतदन्ते for तदन्ते.
5. Bl. व्रतं for शतं.
6. ABBl. om. इत्युपादेयम्.
9. सामेदं *See* CN.
10. ततो भोजनं *See* CN.
13. RAl. वासम् for वासः.
16. RAl. add. वर्गस्य after इति.
19. Bl. चरणादिसहस्रेषु; B. चरण...for (आ) चरण...

भ - अन्यस्येति । ब्राह्मणादन्यस्य स्वं हृत्वा कृच्छ्रं प्रथमोक्तं प्राजापत्यं चरन् तेषु दिनेषु 'अयं सहस्रमानवः' (साम. i. 458) इति वर्गस्य द्वितीयं गायेदिति ॥

**3. गुरुदारान् गत्वा सुरापकल्पेनाक्रानित्येतद् गायेत् ॥**

अथ गुरुदारगमने प्रायश्चित्तमाह—गुरुदारानिति । गुरुदारान् उपनयनादिकं कृत्वा यो वेदमध्यापयति स गुरुः । तथा च स्मर्यते—

'स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति' (याज्ञ स्मृ. i. 34)

इति । तस्य भार्यां गत्वा सुरापकल्पेन ''सुरां पीत्वा संवत्सरम्' इत्यादिना, 'स्वस्ति वाचयित्वा' इत्यन्तेन कल्पेन चरन्, 'पवित्रं ते' इत्युत्तरस्य स्थाने 'अक्रान्त्समुद्रः' (साम. i. 529) इत्येतत् साम गायेत् ॥

भ - गुरुदारानिति । गुरुदारगमने संवत्सरमष्टमे काले भुञ्जानः' इत्यादिना 'ब्राह्मणान् स्वस्ति वाचयित्वा पूतो भवति' इत्यन्तेन उक्तेन सुरापकल्पेन 'पवित्रं ते' इत्युत्तरस्थाने आक्रानित्येतद् अहोरात्राणि गायेदिति ॥

**4. ब्राह्मणदारान् गत्वा त्रीन् कृच्छ्रांश्चरन् ब्रह्म जज्ञानम्** (साम. i. 321) **इति पूर्वम् ॥**

सा - अथ ब्राह्मणदारगमने प्रायश्चित्तमाह—ब्राह्मणदारानिति । त्रीन् कृच्छ्रान् कृच्छ्रातिकृच्छ्रकृच्छ्रातिकृच्छ्राख्यान् । 'अथातस्त्रीन् कृच्छ्रान् व्याख्यास्यामः' इत्यादिनोक्तान् । स्पष्टमन्यत् ॥

---

4. P. सुराकल्पेन for सुरापकल्पेन.

7. P. वेदं प्रयच्छति यः स गुरुः for यो वेदम्...; P. तथात्र for तथा च.

8. P. क्रियां for क्रियाः.

9. P. सुराकल्पेन for सुराप...

10. इत्येतदन्तेन for इत्यन्तेन.

11. A. om. साम; B. om. साम गायेत्.

14. RAl. पवित्रेण for पवित्रं त.

18. कृच्छ्रमतिकृच्छ्रं कृच्छ्रातिकृच्छ्राख्यान् for कृच्छ्र०...

भ - ब्राह्मणदारानिति । त्रीन् कृच्छ्रान् [कृच्छ्रातिकृच्छ्र]कृच्छ्रातिकृच्छ्रे-त्याख्यान् । त्रिः कृच्छ्राऽऽश्वरन्नित्यवचनात् प्राजापत्यं त्रिश्चरन्निति स्यात् । स्पष्टमन्यदिति ॥

## 5. अन्यस्य गत्वा कृच्छ्रं चरन्नरण्योरित्येतत् ॥

सा - अथ क्षत्रियवैश्ययोर्दारगमने प्रायश्चित्तमाह—**अन्यस्येति** । **अन्यस्य** । अत्रान्यशब्देन ब्राह्मणस्योक्तत्वात् शूद्रस्य वक्ष्यमाणत्वात् राजन्य-वैश्यजातीयौ विवक्ष्येते । तस्य भार्यां **गत्वा कृच्छ्रं** प्राजापत्याख्यं **चरन्** **'अरण्योः'** (साम. i. 79) **इत्येतत्** साम गायेत् । कृच्छ्रसमाप्तिपर्यन्तं नित्यकर्माविरोधेनेत्यभिप्रायः ॥

भ - **अन्यस्येति** । ब्राह्मणादन्यस्य राजन्यस्य वा वैश्यस्य वा दारान् गत्वा [कृच्छ्रं] प्राजापत्यं चरन् 'अरण्योः' (साम. i. 79) इत्येतत् भावनं कालादशाणादिष्टासंख्यं (!) गायेदिति ॥

## 6. शूद्रां गत्वा त्रिरात्रमुपवसन्निडामग्न इत्येतत् ॥

अथ शूद्रदारगमने प्रायश्चित्तमाह—**शूद्रामिति** । स्पष्टोऽर्थः । अत्राप्युपवासदिवसेष्वेव गानविधानादावृत्तिसंख्या नापेक्ष्यते ॥

भ - **शूद्रामिति** । **शूद्रां गत्वा** त्रिरात्रं व्रतं चरन् **'इडामग्ने'** (साम. i. 76) इत्येतत् गायेदिति ॥

## 7. अकाले दारानुपेत्य त्रीन् प्राणायामानायम्य कयानाया द्वितीयमावर्तयेत् ॥ २ ॥

---

1. Ral. कृच्छ्रातिकृच्छ्रमिति स्यात् for कृच्छ्रातिकृच्छ्रेत्याख्यान् ०...
6. ABBl. om. अन्यस्य.
9. तन्नित्य० for नित्य०
11. भावनं *See* CN.
15. P. पर्वाद्युपवासदिवसेष्वेव गमननिवृत्तिः सा च नापेक्ष्यते for अत्रापि...
18. My प्राणान् for प्राणायामान्.

सा - अथ स्वभार्याया एवाकालभोगे प्रायश्चित्तमाह—अकाल इति। अकालो द्वेधा संभवति। ऋतुकालव्यतिरिक्तश्चैकः, ऋतुकाले पर्वादिनिषिद्ध-तिथ्यात्मको द्वितीयः।

"पर्ववर्जं व्रजेद्धीमान्..." (म. स्मृ. 3. 45)

इति स्मृतेः। तस्मिन् स्त्रियं गत्वा त्रीन् प्राणायामान् आयम्य 'कया नः' (साम. i. 169) इत्यस्या द्वितीयं साम आवर्तयेत् ॥ २ ॥

भ - अकाल इति। अकाले अनृतौ। ऋतावपि दर्शादिनिषिद्धेषु [कालेषु] दारोपगमने कयानाया (साम. i. 169) द्वितीयमावर्तयेत् ॥

8. ब्राह्मणाद्वार्धुषिं हृत्वा त्रीन् कृच्छ्रांश्चरन् ब्रह्म जज्ञानमित्युत्तरम् ॥

अथ ब्राह्मणाद् वृद्धिरूपर्णादाने प्रायश्चित्तमाह—ब्राह्मणादिति। ब्राह्मणाद् उत्तमवर्णात् वार्धुषिं वृद्ध्या प्राप्तं धनं हृत्वा गृहीत्वा तत्प्रतीकाराय त्रीन् पूर्वोक्तान् कृच्छ्रांश्चरन् 'ब्रह्म जज्ञानम्' (साम. i. 321) इत्युत्तरं साम गायेत् ॥

भ - ब्राह्मणादिति। ब्राह्मणादुत्तमवर्णाद् वार्धुषिं वृद्ध्या प्राप्तं धनं हृत्वा आदायेत्यर्थः। शिष्टं सिद्धमिति ॥

---

2. P. adds अकाले before अकालः ; P. om. च. P. adds अपि after ०काले.

3. P. ०कालात्मके निषिद्धो द्वितीयः for ०तिथ्यात्मको द्वितीयः.

4. चैनां for धीमान्.

5. B. adds: "प्रमेही पर्वमैथुनी" after स्मृतेः.

6. ABBl. अस्यां for अस्याः.

7. RAl. दर्शान्निषिद्धेषु for दर्शादि...

11. AB. ब्राह्मणवृद्ध्यप्रदानरूपमृणा (रूपऋणा B) प्रदानं (न B) प्रायश्चित्तम्, Bl. ब्राह्मणवृद्धिरूपर्णाप्रदाने...for ब्राह्मणाद्० . . .

12. A. वृद्धिप्राप्तं for वृद्ध्या.... ; ABBl. अदत्वा for गृहीत्वा.

**9.** अन्यस्य हृत्वा कृच्छ्रं चरन्ननु हि त्वा सुतꣳ सोमेत्यनु हि त्वा सुतꣳ सोमेति ॥ ३ ॥ ६ ॥

सा - अथ क्षत्रियादेर्वृद्धिहरणे प्रायश्चित्तमाह—**अन्यस्येति** । **अन्यस्य** ब्राह्मणव्यतिरिक्तस्य क्षत्रियादेरनुत्तमवर्णस्य वृद्धिप्राप्तं धनं **हृत्वा** पूर्वोक्तं **कृच्छ्रं चरन्** 'अनु हि त्वा सुतꣳ सोम' (साम. i. 432) इति एतत् साम गायेत् । अभ्यासः खण्डसमाप्त्यर्थः ॥ ३ ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

भ - अन्यस्येति ॥

॥ षष्ठोऽनुवाकः ॥

---

3. A. adds अथ before second अन्यस्य.
4. ABl. om. क्षत्रियादेः and reads उत्तमवर्णस्य for अनुत्तमवर्णस्य.
5. P. om. सुतꣳ सोम; A. om. साम.
6. A. om. खण्ड.
7. A. om. the whole colophon. B. सामविधानब्राह्मणे for साम. ब्राह्मणे.

# सप्तमः खण्डः

**1. राज्ञः प्रतिगृह्य मासमुदके वसन् दिवा भुञ्जानो महत्तत्सोमो महिषश्चकारेत्येतद्गायेत् ॥**

**सा** - अथ राजप्रतिग्रहे प्रायश्चित्तमाह—**राज्ञ** इति । **राज्ञः** प्रजापालनादिस्वधर्मोपेतस्य क्षत्रियस्य धनमनापदि **प्रतिगृह्य** गोहिरण्यादि लब्ध्वा विहितकल्पं चरेत् । आपद्यभ्यनुज्ञा स्मर्यते—

"राजतो धनमन्विच्छेत् संसीदन् स्नातकः क्षुधा ।"

(म. स्मृ. ४. ३३)

इति । शिष्टं स्पष्टम् ॥

**भ** - **राज्ञ** इति । अनापदि राज्ञः प्रतिगृह्य एतत्प्रायश्चित्तं चरेत् ।

"राजतो धनमन्विच्छेत् संसीदन् स्नातकः क्षुधा ।"

(म. स्मृ. ४. ३३)

इत्यापद्गतस्य स्नातकस्य राज्ञः प्रतिग्रहेऽनुमतिस्मरणात् । अर्थस्तु स्पष्ट एवेति ॥

**2. अन्यस्याप्रतिग्राह्यस्य कृच्छ्रं चरंस्त्रिकद्रुकेष्वित्येतत् ॥**

**सा** - अथोक्तव्यतिरिक्तस्याप्रतिग्राह्यस्य प्रतिग्रहे प्रायश्चित्तमाह—**अन्यस्ये**ति । **अन्यस्य अप्रतिग्राह्यस्य** स्मृतिषु यस्य प्रतिग्रहो निन्दितस्तस्य जनस्य राजव्यतिरिक्तस्य धनं प्रतिगृह्य **कृच्छ्रं** प्राजापत्यं **चरन्** तद्दिवसेषु **'त्रिकद्रुकेषु'** (साम. ii. 724) **इत्येतत्** साम गायेत् । अत्राप्यनापदीति मन्तव्यम् । आपद्यभ्यनुज्ञानात् । तथा हि—

---

1. My वासः for वसन्.

6. P. शंसितः, A. संहितः B. हिंसितः for संसीदन्.

14. AB. om. second अन्यस्य; A. प्रतिग्रहे निन्दितस्य जनस्य for यस्य प्रति०...जनस्य.

16. ABBl. om. साम; P. om. second इति.

"आपद्गतः संप्रगृह्णन् भुञ्जानोऽपि यतस्ततः ।
न लिप्येतैनसा विप्रो ज्वलनाग्निसमो हि सः ॥"

(या. स्मृ. iii. 41)

इति स्मृतिः ॥

भ - अन्यस्येति । अप्रतिग्राह्यस्य [।] भिशस्तादन्यस्य राजन्यव्यतिरिक्तस्यापि धनं प्रतिगृह्य एतद्भावेत् । एतदप्यनापद्गतस्यैव ।

"आपद्गतः संप्रगृह्णन् भुञ्जानो वा यतस्ततः ।
न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः ॥"

(या. स्मृ. iii. 41)

इति स्मरणादिति ॥

3. अदत्तादान एकरात्रमुपवसन्नग्निस्तिग्मेन (साम. i. 22) इति द्वितीयम् ॥ १ ॥

सा - अथ अदत्तादाने प्रायश्चित्तमाह—अदत्तेति । अदत्तस्य स्वामिनः संनिधौ दाक्षिण्यादिना अन्येन वा अप्रतिषिद्धस्य धनस्यादाने । पश्यतोहरणे तु चौर्यात्मकत्वात् स्तेयप्रायश्चित्तं द्रष्टव्यम् । शिष्टं स्पष्टम् ॥ १ ॥

भ - अदत्तस्य धनस्य धनस्वामिनः संनिधौ दाक्षिण्यादिनाप्रतिषिद्धस्यादाने [ए]तत्प्रायश्चित्तं स्यात् । बलादिना आदाने तु पश्यतोहर[णं] तत्स्तैन्यमेवेति स्तेयप्रायश्चित्तम् एव पूर्वोक्तं स्यात् इति विवेक्तव्यमिति ॥

---

1. B. आपदि प्रतिगृह्णन् सन् for आपद्गतः संप्रगृह्णन्.
2. PA. ज्वलनार्क for ज्वलनाग्नि.
4. RAl. [अ]भिश (स R) स्तादशस्याराजन्यस्य व्यति for (अ) भिशस्ताद्...
12. P. तेन for अन्येन वा
13. P. स्तेन for स्तेय
15. RAl. दाक्षिण्येत्यादिना for दाक्षिण्यादिना.
16. R. अथादारे· Al. (आ)दारे for (आ)दाने ; RAl. हरः for हरणं.
17. RAl. तत्तै (त्रै Al.) न एवं ति for तत्स्तैन्यमेवेति; Al. एतत् for एव.

**4.** **ब्राह्मणायावगूर्य प्राणं गायेत् । निहत्यापानम् । शोणिते क्षरति प्र सोम देववीतय इति द्वितीयम् ॥ २ ॥**

सा - अथ ब्राह्मणावगूरण-ताडन-रुधिरोत्पादनेषु प्रायश्चित्तान्युच्यन्ते— **ब्राह्मणायेति** । **ब्राह्मणाय अवगूर्य** ताडनार्थं हस्तदण्डाद्युद्यमनं कृत्वा **प्राणा**ख्यं साम **गायेत्** । **निहत्य** संताड्य **अपाना**ख्यं साम गायेत् । देहे **शोणिते क्षरति** सति **प्र सोम देववीतये** (साम. i. 514) इति अस्यां **द्वितीयं** गायेत् ॥ २ ॥

भ - **ब्राह्मणायेति** । **ब्राह्मणाय अवगूर्य** उद्यम्य प्रहरणार्थं हस्तलकुट-दण्डादीना[मुद्यमनं] कृत्वा एकरात्रमुपमसन् **प्राणा**ख्यं साम गायेत् इति । **निहत्य** प्रहारेण ताडयित्वा ब्राह्मणम् **अपाना**ख्यं साम गायेदिति । ब्राह्मण-देहात् प्रहारेण **शोणिते क्षरति** एकरात्रमुपवसन् इदं गायेदिति ॥

**5.** **राजन्यवैश्यौ सवनगतौ हत्वा ब्राह्मणस्वकल्पेन शुद्धाशुद्धीयमुत्तरम् ॥**

सा - अथ सवनस्थराजन्यवैश्ययोर्हनने प्रायश्चित्तमाह—**राजन्यवैश्या**विति । **राजन्यवैश्यौ सवनगतौ** सूयते सोमोऽत्रेति सवनं सोमयागः, तं प्राप्तौ सोमयाजिनौ **हत्वा ब्राह्मणस्वकल्पेन** ब्राह्मणस्वहरणोक्तेन **'मासमुदके वासश्चतुर्थे काले भोजनम्'** इत्याद्युक्तेन कल्पमनुष्ठाय तदन्ते **'शुक्रं ते'** (साम. i. 75) इत्यस्य स्थाने **शुद्धाशुद्धीयमुत्तरं** शतकृत्वो गायेत् ॥

---

3. AB. om. अथ ; Bl. PA. ब्राह्मणाय for ब्राह्मण ; P. लोहित for रुधिर ; P. प्राश्चश्चित्तमाह for प्राय०...

8. प्रहरणार्थं *See* CN.

10. निहत्य *See* CN.

11. RAl. मन्त्रं for रात्रं.

12. P. ब्राह्मणः स्व० for ब्राह्मणस्व०

15. P. यत्र for (अ)त्र ; AB. ०यागं प्राप्तौ for ०यागः, तं प्राप्तौ.

16. P. adds तौ before हत्वा ; P. ब्राह्मणः स्वकल्पेन for ब्राह्मणस्व०

17. P. भोजनं दिवा बहिरा स्यात्—इत्युक्तकल्पम् for भोजनमित्याद्युक्तेन कल्पम्.

18. P. एतस्य for अस्य ; P. adds. दशावरं before शतकृत्वः.

भ - राजन्[यवैश्यौ सवनगतौ हत्वा ब्राह्मणस्वकल्पेन "मासमुदके वासश्चतुर्थे काले भोजनं] दिवा बहिरा स्याद् व्रतान्ते 'शुक्रं ते अन्यद्यजतं ते अन्यत्' (साम. i. 75) इत्येतस्य स्थाने शुद्धाशुद्धीयमुत्तरं शतकृत्वो गायेत् । पूतो भवति । इति ॥

**6. शूद्रꣳहत्वा द्वादशरात्रमुपवास उदके च वासोऽयं त इन्द्र सोम इति द्वितीयम् ॥**

सा - अथ शूद्रहनने प्रायश्चित्तमाह—शूद्रमिति । शूद्रं चतुर्थवर्णं हत्वा द्वादशरात्रमुपवासः तेषु दिनेषु उदके वासश्च । 'अयं त इन्द्रः' (साम. i. 159) इत्यस्य द्वितीयं नित्यकर्माविरोधेन गायेत् गानं कर्तव्यम् ॥

भ - शूद्रहत्यायामिदं प्रायश्चित्तमिति ॥

**7. गाꣳहत्वा द्वादशरात्रमुपवास उदके च वासो वयं घ त्वा सुतावन्त इति द्वितीयम् ॥**

सा - अथ गोवधे प्रायश्चित्तमाह—गामिति । गां हत्वा तत्स्वामिनेऽन्यां दत्वा द्वादशरात्रमुपास उदके वासश्च । 'वयं घ त्वा सुतावन्तः' (साम. i, 261) इति द्वितीयम् । स्पष्टार्थमन्यत् ॥

भ - गामिति । निगदसिद्धमिदमिति ॥

**8. अन्यत् प्राणि हत्वैकरात्रमुपवसन्नग्निस्तिग्मेन (साम. i. 22) इति द्वितीयम ॥**

सा - अथान्यप्राणिवधे प्रायश्चित्तमाह—अन्यदिति । अन्यत्प्राणीति गोव्यतिरिक्तमजादिकमुच्यते । स्पष्टमन्यत् ॥ ३ ॥

भ - अन्यदिति । अन्यत् गोव्यतिरिक्तं प्राणि द्रव्यमजादिकं हत्वा एतच्चरेदिति ॥

---

7. AB om. अथ; AB. हनन for हनने.

8. AB Bl. जलवासश्च for उदके वासश्च;

13. अथ *Sec* CN.

19. ABl. गोव्यतिरिक्तवधे for अन्यप्राणिवधे.

**9 अवकीर्णी त्रीन् कृच्छ्रांश्चरन् परीतो षिञ्चता सुतमिति चतुर्थमावर्तयेत् ॥**

**सा** - अथावकीर्णिनः प्रायश्चित्तमुच्यते—**अवकीर्णीति** । यो ब्रह्मचारी स्त्रियमुपेयात् सोऽवकीर्णी । तस्य स्वरूपं जातुकर्ण्य आह—

"खण्डितं व्रतिना रेतो येन स्याद्ब्रह्मचारिणा ।
कामतो नामतः प्राहुरवकीर्णीति तं बुधाः ॥"

इति । स प्रथमोक्तान् त्रीन् कृच्छ्रांश्चरन् तेषु कालेषु **'परीतो षिञ्चता सुतम्'** (साम. i. 512) **इति चतुर्थमावर्तयेत्** इति ॥

**भ** - **अवकीर्णीति** । यो ब्रह्मचारी सन् स्त्रियमुपगच्छेत् सोऽवकीर्णी । स त्रीन् कृच्छ्रान् प्रथमोक्तांश्चरन् तावति काले **'परीतो षिञ्चता सुतम्'** (साम. i. 512) **इति चतुर्थमावर्तयेत्** इति ॥

**10. एतेन कल्पेन परिवेत्ता परिविन्दश्च सोमं राजानं वरुणमित्येतत् ॥**

**सा** - अथ परिवेत्तृपरिविन्दयोः प्रायश्चित्तमाह—**एतेनेति** । अग्रजे अविवाहिते सति योऽनुजो जायां विन्दते स परिवेत्ता । तदग्रजः परिविन्दः । तावुभावपि **एतेन** पूर्वोक्तेन **कल्पेन** चरन्तौ सन्तौ **'सोमं राजानं वरुणम्'** (साम. i. 91) **इत्येतत्** गायेताम् ॥

**भ** - **एतेनेति** । ज्येष्ठे भ्रातर्यदारे यः कनीयान् दारान् करोति स परिवेत्ता । यमसौ परिविन्दति सः श्रेष्ठः परिविन्दः । तपोऽतिकृच्छ्रत्रयकाले **'सोमं राजानं वरुणम्'** (साम. i. 91) **इत्येतस्य** गानमिति ॥

---

3. ABBl. om. प्रायश्चित्तम्.

4. P. ज्ञातुमन्यत्र; B. ज्ञातुकर्ण्यः for जातुकर्ण्यः.

5. PBl. व्रतिनां for व्रतिना; P. ब्रह्मचारिणः for ब्रह्मचारिणा.

14. AB. परिवित्तिपरिविन्नयोः Bl. परिवेत्तृपरिवित्त्योः for परिवेत्तृ...

16. A. परिविन्नः; Bl. परिवित्तिः for परिविन्दः; ABBl. चरन् सोमं... गायते for चरन्तौ सन्तौ...गायेताम् ।

**11. अयोनौ रेतः सिक्त्वाग्निर्मूर्द्धा घृतवती (साम. i. 378) द्वितीयं यदितस्तन्वो ममेति च ॥**

सा - अथायोनौ रेतःसेके प्रायश्चित्तमाह—अयोनाविति । **अयोनौ** अप्रगल्भयोनौ योनिव्यतिरिक्ते वा प्रदेशे **रेतः** सेचयित्वा तत्प्रायश्चित्ताय स्नात्वा अग्निर्मूर्द्धाऽऽदीनि त्रीणि सामानि गायेत् ॥

भ - अयोनाविति । अयोनौ रेतःसेके जाते सति **अग्निर्मूर्द्धा** (साम. i. 27)ऽऽदीनि त्रीणि सामानि गायेदिति ॥

**12. शूद्रजीविकायां सेवित्वोपरम्य त्रीन् कृच्छ्रांश्चरंश्चक्रमित्येतद्गायेत् ॥**

सा - अथ शूद्रोपजीवने प्रायश्चित्तमाह—शूद्रजीविकामिति । जीवनार्थं शूद्रं प्रभुं सेवित्वा तद्दत्तेन धनेन यदुपजीवनं सा शूद्रजीविका । तां सेवित्वा प्राप्य ततः कदाचिद् उपरम्य कष्टमित्युपरतो भूत्वा त्रीन् कृच्छ्रांश्चरन् **'चक्रम्'** (साम. i. 331) इत्येतत् साम गायेत् ॥

भ - शूद्रजीविकायामिति । शूद्रान् सेवित्वा तल्लब्धजीविकायां सेवित्वा प्राप्य यदेदमकृतमिति जानीयात्तदैवोपरम्य **त्रीन् कृच्छ्रांश्चरन्** तत्काले **'चक्रम्'** (साम. i. 331) इत्येतद् गायेत् । पूतो भवति ॥

---

1. My. घृतवतीति for घृतवती.
2. यदितः *See* CN.
3. AB. अयोनि for अयोनौ ; AB. om. आह.
5. ABBl. add इति after गायेत् .
6. R. ज्ञात्वाग्निः..., Al. ज्ञात्यग्निः...for सति अग्निः...
8. My MABSRAl. ०जीविकायां for ०जीविकां.
10. B. शूद्रजीवने for शूद्रोपजीवने; BA ०जीविकायाम् for ०जीविकाम्.
11. P. om. जीवनार्थे ; B. om. जीवनार्थे...साम गायेत् ॥ ; A. शूद्रजीविका सा, तस्याः शूद्रोपजीविकाया उपरम्य तदुपजीवनं त्यक्त्वेत्यर्थः । for सा शूद्रजीविका ।...भूत्वा.
13. A. कृच्छ्रत्रयं कृत्वा चक्रं यदस्येति for त्रीन्...चक्रमित्येतत्.
14. RAl. तान् लब्ध्वा जीविकानां for तल्लब्ध...
16. R. तन्वाले, A तन्कलि for तत्काले.

**13. वैश्यजीविकायां वयः सुपर्णा** (साम. i. 319) **इत्येतत् । राजन्यजीविकायां पवस्व सोम मधुमाऽ्ऋतावेत्येतदभित्यं मेषमिति वा ॥**

सा - अथ वैश्यक्षत्रिययोराह—**वैश्येति** । उभयत्रापि उपरम्य त्रीन् कृच्छ्रानित्येतत् समानम् । क्षत्रियविषये विकल्पः । "पवस्व सोम" (साम. i. 532) "अभित्यं मेषम्" (साम. i. 376) इत्येतयोरन्यतरद् गायेदिति ॥

भ - **वैश्यजीविकाया**मिति । सिद्धप्रायमिदमिति ॥

**राजन्यजीविकाया**मिति । राजन्यजीविकां सेवित्वोपरम्य त्रीन् कृच्छ्रां-श्चरन् काले "पवस्व सोमाभित्यं मेषम्" [इत्येत]योरन्यतरद् गायेदिति ॥

**14. सदा प्रयोगः ॥**

सा - अथ शूद्रादिजीविकासु कृच्छ्रत्रयकाले यद् गानं विहितं तस्य कः काल इति जिज्ञासायामाह—**सदेति** चक्रादीनां साम्नां तत्प्रायश्चित्तकालेषु **सदा** नित्यनैमित्तिकानुगुण्येन **प्रयोगः** कार्यः ॥

भ - अथ शूद्रजीविकादीनां प्रायश्चित्ते त्र्यहं गानं कुर्यादित्युक्तम् । कस्मिन् काले कथमित्याकाङ्क्षायामाह—**सदेति** । नित्यनैमित्तिककर्मानुष्ठान-कालं विण्मूत्राद्यवश्यककालं च परित्यज्य सर्वदा प्रयोगः कार्य इति ॥

**15. ब्राह्मणमनृतमभिशस्य तत्पापं प्रतिपद्यते । गुह्यं प्रकाशयन्नर्धभाग् भवति ॥**

सा - अथ ब्राह्मणमिथ्याभिशंसनगुह्यप्रकाशनयोः प्रायश्चित्तं विवक्षुस्तत्करणे दोषबाहुल्यं श्रावयति—**ब्राह्मण**मिति । ब्राह्मणमनागसम्

---

4. A om. अथ वैश्य....आह , BlB. क्षत्रियवैश्ययोः for वैश्य...
5. AB om. विकल्पः.
12. P. कृच्छ्रत्रयं गानं च विहितं for कृच्छ्र...
15. RAl. त्यहंगानां for त्र्यहं गानं.
20. P. मिथ्याशस्ति for मिथ्याभिशंसन.
21. AB. करण for करणे.

**अनृतं** मिथ्यार्थम् **अभिशस्य** ब्रह्महत्यादिनिन्दामारोप्य शंसनं कृत्वा, तस्य यत्पापमस्ति, स्वयं तद्भाग् भवति । तथा **गुह्यम्** अन्यैरविदितं ब्राह्मणस्य पातकादिकं परेभ्यः **प्रकाशयन्** तत्कृतस्य पापस्यार्धं स्वयं प्राप्नोति । अत एव एतदुभयमपि निन्दितमित्यर्थः ॥

भ - अथ ब्राह्मणाभिशंसने प्रायश्चित्तं विधित्सुरभिशंसनस्य तावत्फलमाह--**ब्राह्मणमिति** । ब्राह्मणं पातकोपपातकमहापातकैः **अनृतम् अभिशस्य** तदेव पापं पातकादिकं प्रतिपद्यते । सत्यमपि **गुह्यम्** अज्ञातं परैः पातकादिकं **प्रकाशयन्नर्द्धभाग् भवति** तस्य पापस्येति ॥

## 16. अग्निस्तिग्मेन (साम. i. 22) इति वर्गं प्रयुञ्जानस्तेन तत्तरति तेन तत्तरति ॥ ४ ॥ ७ ॥

सा - अथ तयोः प्रायश्चित्तमाह--**अग्निस्तिग्मेनेति** । उक्तसामवर्गमन्वहं **प्रयुञ्जानः तेन** प्रयोगेण **तत्** निर्दिष्टं पापद्वयं **तरति** अपोहति ॥

अभ्यासः खण्डसमाप्त्यर्थः ॥ ४ ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये सप्तमः खण्डः ॥

भ - अथास्य प्रायश्चित्तमाह—अग्निस्तिग्मेनेति । तेन **'अग्निस्तिग्मेन'** (साम. i.22) **इति** [प्रयोगेण] **तत्** पापं तरति । इति ॥

॥ सप्तमोऽनुवाकः ॥

---

1. P. अयथार्थम् for मिथ्यार्थम् ; Bl. कृतस्य for कृत्वा, तस्य.

3. P. om. अत एव; A om. एव

4. Bl. तद् for एतद् and om. अपि.

12. A. तेन तत्तरति प्रयोगेण तन्निर्दिष्टपापद्वयं; B. तेन तत्तत्प्रयोगेण तन्निर्दिष्ट... for तेन ...; PBl. अपापो भवति for अपोहति ; AB add अभ्यासयुक्तः after अपोहति.

13. AB om. अभ्यासः खण्डसमाप्त्यर्थः.

14. A. om. colophon.

15. B. om. तृतीये and प्रथमाध्याये

# अष्टमः खण्डः

**1. रसान् विक्रीय कृच्छ्रं चरन् घृतवतीद्वितीयम् ॥**

सा - अथ रसविक्रये प्रायश्चित्तमाह—**रसा**निति । **रसान्** तैलदध्यादीन् **विक्रीय** विक्रयं कृत्वा **कृच्छ्रं** प्राजापत्यं **चरन्** '**घृतवती**' (साम. i. 378) इत्यस्य **द्वितीयं** गायेत् । ब्राह्मणस्य रसविक्रये निन्दा स्मर्यते—

"तिला रसा न विक्रेया विक्रेया धान्यतत्समाः ।
वैश्यस्यैवंविधा वृत्तिस्तृणकाष्ठादिविक्रयः ॥"

इति ॥

भ - **रसा**निति । स्पष्टोऽर्थः ॥

**2. उभयतोदन्तान् विक्रीय कृच्छ्रं चरन् को अद्य युङ्क्त इत्येतत् ॥**

सा - अथाश्वादिविक्रये प्रायश्चित्तमाह—**उभयत** इति । **उभयतोदन्तान्** अश्वादीन् **विक्रीय कृच्छ्रं** पूर्वोक्तं प्राजापत्यं **चरन्** तद्दिवसेषु '**को अद्य युङ्क्ते**' (साम. i. 341) **इत्येतत्** साम गायेत् ॥

भ - **उभयतोदन्ता**निति । उभयतोदन्ता अश्वप्रभृतयः । स्पष्टमन्यदिति ॥

---

1. My. कृच्छ्रान् for कृच्छ्रं.

3. P. तैलघृतदध्यादीन् for तैल....

5. P. एतस्य Bl. अस्यां for अस्य; P. om. ब्राह्मणस्य ... इति ॥; BBl. रस विक्रय for रस विक्रये.

7. A. धान्यतरसमाः for धान्यतत्समाः.

11. My. कृच्छ्रान् for कृच्छ्रं.

12. MA add गायेत् after एतत्

**3. तान् प्रतिगृह्यैतेनैव कल्पेन शं पदमित्येतत् ॥**

सा - अथाश्वादिप्रतिग्रहे प्रायश्चित्तमाह—तान् प्रतिगृह्येति । तान् अश्वादीन् **प्रतिगृह्य एतेनैव कल्पेन** कृच्छ्रानुष्ठानपूर्वकेण 'को अद्य' (साम. i. 341) इत्येतस्य स्थाने **'शं पदम्'** (साम. i. 441) इत्येतत् गायेत् । न चात्र प्रतिग्रहशब्दो 'यावतोऽश्वान् प्रतिगृह्णीयाद्' इत्यत्रेव संप्रदानपर इति मन्तव्यम् । तत्र "प्रजापतिर्वरुणायाश्वमनयत् । स स्वां देवतामार्छत् । स पर्यदीर्यत" इति वाक्योपक्रमेण तथा निर्णीतम् । इह तु प्रसिद्धार्थापरित्यागे विरोधाभावात् ॥

भ - तानिति । उभयतोदन्तान् प्रतिगृह्य एतेनैव कल्पेनेति 'कृच्छ्रं चरन्' इत्येतत् । स्पष्टमन्यदिति ॥

**4. अदत्तां कन्यां प्रकृत्य कृच्छ्रं चरन्नभ्रातृव्यो अना त्वमित्येतद्गायेत् ॥**

सा - अथादत्तकन्योपगमे प्रायश्चित्तमाह—अदत्तां कन्यामिति । पित्रादिना **अदत्तां कन्यां प्रकृत्य** विवाहं कृत्वा, तत्प्रायश्चित्तार्थं **कृच्छ्रं चरन्** **'अभ्रातृव्य'** (साम. i. 399) इत्येतत् साम गायेत् ॥

भ - अदत्तां कन्यां प्रकृत्येति । विवाहं तस्याः कृत्वेत्यर्थः । सुज्ञानमन्यदिति ॥

**5. तां प्रतिगृह्यैतेनैव कल्पेन शं पदमित्येतत् ॥**

---

1. B. तेन for एतेन ; T om. एव.
3. P. पूर्वेण for पूर्वकेण.
5. अत्रैव for अत्रेव.
6. P. om. संप्र.
7. P. क्रमेण for (उ)पक्रमेण
8. P. om. ०अर्थ० Bl. ०र्थः परि० B. ०र्थपरि० for प्रसिद्धा०...
9. Al. तेन for एतेन.
13. P. (उ)पगमने for (उ)पगमे.
16. RAl. कृत्येतत् for कृत्वेत्यर्थः.

सा - अथ तस्या एव प्रतिग्रहे प्रायश्चित्तमाह—तां प्रतिगृह्येति । ताम् अदत्तां कन्याम् अन्येन प्रकृतां पित्रादिना बलादाकृष्य दत्तां प्रतिगृह्य भार्यात्वेन स्वीकृत्य एतेन पूर्वोक्तेन कल्पेन कृच्छ्रं चरन् 'शं पदम् (साम. i. 441) इत्येतत् गायेत् ॥

भ - तामिति । ताम् अदत्तामन्येन प्रकृतां पित्रादिना तस्माद्दुच्छिद्य दत्तां भार्या[त्वे]न प्रतिगृह्य कृच्छ्रं चरन् 'शं पदम्' इत्येतत् गायेत् ॥

**6. अभ्युदितो भद्रो नो अग्निराहुत** (साम. i. 111) **इत्येतद्गायेत् ॥ अभ्यस्तमितो न तस्य मायया च न** (साम. i. 104) **इति ॥ १ ॥**

सा - अथाभ्युदिताभ्यस्तमितयोः प्रायश्चित्तमाह—अभ्युदित इति । यस्मिन् सुप्ते सूर्य उदेति सोऽभ्युदितः । यस्मिन् सुप्तेऽस्तमेति सोऽभ्यस्तमितः । तौ यथाक्रमं विहिते सामनी गायेताम् । अत्रावृत्त्यश्रवणात् शतं दशावरमिति सामान्येनोक्ता आवृत्तिर्द्रष्टव्या ॥ १ ॥

भ - अभ्युदित इति । अभ्युदितः उदयकाले स्वपन्तमादित्योऽभ्युदियात् सोऽभ्युदितः । स 'भद्रो' (साम. i. 111) इत्येतच्छतकृत्वो गायेत् । अभ्यस्तमितोऽभ्युदितेन व्याख्यातः । शिष्टं स्पष्टमिति ॥ १ ॥

**7. दुःस्वप्नेष्वद्या नो देव सवितर्** (साम. i. 141) **इति द्वितीयम् ॥**

सा - अथ दुःस्वप्ने प्रायश्चित्तमाह—दुःस्वप्नेष्विति । स्पष्टोऽर्थः ॥

भ - दुःस्वप्नेष्विति । स्पष्टोऽर्थ इति ॥

---

2. P. पित्रादीनामन्येन प्रदत्तां वा, बलादाकृष्य तां Bl. कन्यामन्येन प्रदत्तां वा पित्रादिना दत्तां बलादाकृष्य for कन्याम्. . .दत्तां.

3. ABBl. कृच्छ्रकल्पेन for कृच्छ्रं चरन्.

11. P. adds सति after first सुप्ते ; अभ्युदेति for उदेति ; P. adds: च after यस्मिन्.

14. RAl. उदित for उदय.

19. P. दुःस्वप्न for दुःस्वप्ने; PBl. om. आह.

**8. अन्यस्मिꣳस्त्वनाज्ञाते कयानाया द्वितीयमावर्तयेत् ॥**

सा - अथाक्षिस्पन्दनादिदुर्निमित्ते प्रायश्चित्तमाह—अन्यस्मिन्निति । **अन्यस्मिन्** उक्तदुःस्वप्नव्यतिरिक्तानर्थसूचकेऽक्षिस्पन्दनादौ **अनाज्ञाते** अविदितफलविशेषे संभाविते सति **कयानाया द्वितीयमावर्तयेत्** । आवृत्तिर्विशेष्यते त्र्यवरमिति । त्रिरावृत्तिः जघन्या । तत्तद्दोषगौरवलाघवानुगुण्येन ततोऽधिकं यथाशक्ति आवर्तयेदित्यर्थः ।

भ - **अन्यस्मिन्निति** । दुःस्वप्नादन्यस्मिन्नागाम्यनर्थ[सूचकेऽ]क्षिस्पन्दनादौ **अनाज्ञाते**ऽज्ञातफलविशेषे **कयानाया** (साम. i. 169) **द्वितीयमावर्तयेत्** त्र्यवरमिति ।

**9. अग्निदग्धे घृताक्तान् यवाञ्जुहुयाज्जातः परेण धर्मेणेत्येतेनाग्नये स्वाहेति च ॥**

सा - अथ गृहादिदाहे प्रायश्चित्तमाह—**अग्निदग्धे** इति । गृहादावग्निदग्धे सति **'जातः परेण** (साम. i. 90) इत्येतेन **घृताक्तान् यवान् जुहुयात् 'अग्नये स्वाहा'** इत्यनेन च द्वितीयामाहुतिं जुहुयात् ॥

भ - अगारेऽग्निदग्धे घृताक्तान् यवान् 'जातः परेण धर्मेण' **'अग्नये स्वाहा'** इति च द्वितीयामाहुतिं जुहुयादिति ॥

---

1. Bl. कयानीया for कयानाया.

3. AB om. आह.

4. P. उक्तदुःस्वप्नाद्यतिरिक्तनानार्थसूचके, ABBl. उक्तदुःस्वप्नव्यतिरिक्तेष्वनर्थसूचकेषु, for उक्त...

5. Bl. कयनीया for कयानाया.

6. त्र्यवरम *See* CN.; P. om. दोष; Bl. दोषो...for ०दोष...

7. P. adds अपि after ततः.

8. RAl. आगाम्यनर्थस्तथाकुक्षिस्पन्दनादावनाद्दते (Al नादे इतः) for आगाम्यनर्थ...

13. P. अग्निना for अग्नि.

14. A. अनेन for एतेन.

**10. मूषिकजग्धे तिलाञ्जुहुयान्नकि देवा इनीमसीतीन्द्राय स्वाहेति च ॥**

सा अथ गृहस्थितव्रीहियवादिभक्षणे प्रायश्चित्तमाह—**मूषिकजग्ध** इति । एतन्निगदेनैव सिद्धम् ।

भ - **मूषिकाजग्धे** मूषिकाभक्षितेऽगारस्य धान्ये तिलान् जुहुयात् **'न कि देवा इनीमसि** (साम. i. 176) **इति'** स्वाहाकारान्ते[न] । **'इन्द्राय स्वाहा'** इति च द्वितीयामाहुतिं जहुयादिति ॥

**11. कूर्चनाश एकरात्रमुपवसन्नग्निस्तिग्मेनेति द्वितीयम् ॥**

सा - अथ कूर्चनाशे प्रायश्चित्तमाह—**कूर्चनाशे** इति । कूर्चनाशे दर्भमयस्यासनस्याग्निदाहादिना नाशे सति **एकरात्रमुपवसन् 'अग्निस्तिग्मेन'** (साम. i. 22) इति अस्य **द्वितीयम्** आवर्तयेदिति ॥

भ - **कूर्चनाश** इति । कूर्च आसनम् । तस्य दाहादिना नाशे **एकरात्रमुपवसन्** तस्मिन्नहनि नित्यकम[ा]विरोधेन **'अग्निस्तिग्मेन'** इति (साम. i. 22) **द्वितीयम्** आवर्तयेदिति

**12 अन्यस्मिꣳस्त्वनाज्ञाते यं वृत्रेष्विति द्वितीयम् ॥**

सा - अथोक्तव्यतिरिक्तगृहोपकरणनाशे प्रायश्चित्तमाह—अन्यस्मिन्निति । **अन्यस्मिन्** कूर्चव्यतिरिक्तगृहोपकरणे **अनाज्ञाते** अनाज्ञातनाशकारणे, नष्टे सति उक्तैकरात्रकल्पेन **'यं वृत्रेषु'** (साम. i. 337) इति **द्वितीयं** साम गायेत् ॥

---

1. T. दग्धे for जग्धे.

3. P. अथाग्निदाहादिना मूषिकदाहे प्रायश्चित्तमाह for अथ गृह... AB. om. आह.

4. ABBl. एवं for एतत्.

5. मूषिकाजग्धे *see* CN.

17. AB अतो व्यतिरिक्त० for अथोक्तव्यतिरिक्त०; AB om. आह

18. P. अज्ञातनाशकारणेन for अनाज्ञात०

19. A. उक्तेनात्र कल्पेन for उक्तैक०.

20. P. om. साम

भ - अन्यस्मिन्निति । अन्यस्मिन् कूर्चव्यतिरिक्ते गृहपरिकरणे अनाज्ञाते अनाज्ञातनाशकारणे नष्टे 'यं वृत्रेषु' (साम. i. 337) इति द्वितीयम् एक[रा]त्रमुपवसन् गायेदिति ॥

**13.** मनुष्येष्वभिवातेषु घृताक्तानां यवानामाढकं जुहुयादग्ने त्वन्नो अन्तम इति चतुर्वर्गेण सामान्तेषु स्वाहाकारैरग्नये स्वाहा वायवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहेति च स्नेहवदमांसमन्नं ब्राह्मणान् भोजयित्वा स्वस्ति वाचयित्वा स्वस्ति हैषां भवति ॥

सा - अथ पुत्रभृत्यादिमनुष्यपीडने प्रायश्चित्तमाह मनुष्येष्विति । आढकं प्रस्थचतुष्टयं 'अग्ने त्वं न' (साम i. 448) इति चतुर्वर्गेण चतस्र आहुतीर्जुहुयात् । सर्वान्ते स्वाहाकारैक्यमाशङ्क्य तद्विशदयति सामान्तेषु स्वाहाकारैरिति । प्रतिवर्गान्ते स्वाहाकारयुक्तेनेत्यर्थः । अथ अग्नये स्वाहा इत्यादिभिश्चतुर्भिश्चतस्र आज्याहुतीः जुहुयात् । 'च'शब्दश्चतुर्वर्गेण सह समुच्चयार्थः । 'स्नेहवत्' घृताद्युपेतम्, अमांसं मांसवर्जितम् अन्नं ब्राह्मणान् त्र्यवरान् भोजयित्वा तान् भुक्तवतः स्वस्ति वाचयित्वा,— अत्र क्त्वाश्रुतेर्ब्राह्मणभोजनस्य पूर्वकालत्वावगमात् पश्चात् उक्तहोम इति गम्यते । एवंकृते एषां पुत्रादीनां स्वस्ति अविनाशि क्षेमं भवति ॥

---

1. RAl. गृह (हे Al) परिकमे for गृह...

10. P. om. आढकं...जुहुयात् ।

11. A. om. जुहुयात्; Bl. "चतुर्वर्गेण सामान्तेषु स्वाहाकारैः" इति स्वाहाकरैक्यमाशङ्क्य तद् विशदयति । प्रतिवर्गान्ते स्वाहाकारयुक्तेनेत्यर्थः । for सर्वान्ते...इत्यर्थः ।

12. B. तथा for अग्न.

14. AB Bl. om. अमांसं.

15. Bl. om. ब्राह्मणान् त्र्यवरान्.

16. Bl. त्वश्रुतेन ब्राह्मणभोजनस्य पूर्वकालत्वानवगमात् for क्त्वाश्रुतेः...; AB. काल for कालत्व.

17. ABBl. om. एषां; P. अविनाशः क्षेममिति for अविनाशि...

भ - मनुष्येष्विति । मनुष्येषु पुत्रदासादिषु अभिवातेषु शुष्केषु व्याध्यादिभिरुपहतेषु घृताक्तानां यवानामाढकं प्रस्थचतुष्टयं जुहुयात् 'अग्ने त्वं न' (साम॰ i. 448) इति । चतुर्वर्गेण साम्नां चतुर्णामन्तेषु स्वाहाकारैः 'अग्नये स्वाहा' इत्यादिभिश्चतुर्भिश्चतस्र आहुतीर्जुहुयात् । स्नेहवत् घृतादियुक्तं मांसवर्जितमन्नं ब्राह्मणान् त्र्यवरान् भुक्तवतः स्वस्ति वाचयित्वा च यथा[क्रमं]जुहुयात् उक्ताः आहुतीः । एषां मनुष्याणां स्वस्ति भवति इति ॥

**14. गोष्वभिवातासु घृताक्तानां यवानामाढकं जुहुयादा वो राजानम् (साम॰ i. 69) इत्येतेन रुद्राय स्वाहेति च यावतीर्धूमः स्पृशति स्वस्ति हासां भवति ॥**

सा - अथ गवामभिघाते प्रायश्चित्तमाह—गोष्वभिवातास्विति । स्पष्टप्रायमेतत् । रुद्रस्य पशुपतित्वात् तदभिवृद्ध्यै रुद्रदेवताकमन्त्रवत्त्वं युक्तम् । यावतीः गाः होमार्थो धूमः स्पृशति आसां स्वस्ति भवति एव । यथा धूमः सर्वाः गाः स्पृशति तथा होमः प्रवृद्धः कर्तव्य इत्यभिप्रायः ॥

भ - गोष्वभिवातास्विति । यावतीः गा आहुतिसंभूतो धूमः स्पृशति तासां स्वस्ति भवति । सिद्धप्रायमितरदिति ॥

**15. अश्वेष्वभिवातेषु घृताक्तानां यवानामाढकं जुहुयादश्वी रथी (साम॰ i. 277) द्वितीयेनाश्विभ्याꣳस्वाहेति च यावतो धूमः स्पृशति स्वस्ति हैषां भवति स्वस्ति हैषां भवति ॥ २ ॥ ८ ॥**

---

11. P. ०घातासु for ०वातासु.
12. A. ०मन्त्रेण कर्तुं युक्तं for ०मन्त्रवत्त्वं...
13. P. होमार्थी for होमार्थः
14. P. om. यथा धूमः सर्वा गाः स्पृशाति; P. adds च after तथा
17. अभिपा (घा) तेषु for अभिवातेषु

सा - अथाश्वाभिघाते प्रायश्चित्तमाह—अश्वेष्विति । सुव्यक्तमेतत् ॥ २ ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमाध्याये अष्टमः खण्डः ॥ ८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे प्रथमोऽध्यायः ॥

॥ इति प्रथमः प्रपाठकः ॥

भ - अश्वेष्वभिवातेष्वित्यादिरनुवाकशेषः सिद्ध एवेति ॥

॥ अष्टमोऽनुवाकः ॥

इति सामविधानस्य भरतस्वामिनः कृतौ ।
पदार्थमात्रविवृतौ प्रथमोऽगात् प्रपाठकः ॥

---

1. B. अभिवाते for अभिघाते ; P. स्पष्टोऽर्थः for सुव्यक्तमेतत् .

3. A om. the whole colophon and has only अष्टमः खण्डः ॥ इति सामविधानब्राह्मणभाष्ये प्रथमोऽध्यायः ॥

4. B. om. तृतीये and प्रथमाध्याये.

9. B. तृतीय for तृतीये

10. B. om. इति प्रथमः प्रपाठकः

द्वितीयः प्रपाठकः

# प्रथमः खण्डः

## 1. अथातः काम्यानाम् ॥

सा - यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

प्रथमाध्याये नित्यकर्माग्निहोत्राद्यर्थानि, प्रायश्चित्तार्थानि च सामाध्ययनानि बहून्युक्तानि । अथायुरादिकामार्थानि द्वितीयेऽभिधीयन्ते । तत्र काम्यानि विधास्यामीति प्रतिजानीते—**अथात** इति । **अथ** प्रायश्चित्तप्रयोगविधानानन्तरं यतः काम्यानां प्रयोगापेक्षा **अतः काम्यानां** कमनीयानां आयुरादिफलानां प्रयोगा उच्यन्त इति शेषः ॥

भ - **अथात** काम्यानामायुरादिकामसाध[का]नां प्रयोगाणां विधिरिति ॥

## 2. अनादेशे त्रिरात्रमुपवासः पुष्येणारम्भः ॥

सा - अथ सामान्यं किंचित् परिभाष्यते—**अनादेश** इति । **अनादेशे** कृच्छ्रं चरित्वेत्यादिविशेषोपदेशरहिते प्रदेशे आदौ **त्रिरात्रमुपवासः** कार्यः । **पुष्येणारम्भ** इति । यत्काम्यमस्मिन् काले कर्तव्यमिति नोक्तं तस्य सर्वस्य **पुष्येण** पुष्यनक्षत्रयुक्ते चन्द्रमसि आरम्भः कर्तव्य इति ॥

भ - **अनादेश** इति । विशेषानादेशे आदौ **त्रिरात्रमुपवासः** कार्यः । **पुष्येण** युक्तचन्द्रमसि **आरम्भ** इति ॥

---

4. A om. यस्य निः श्वसितं......महेश्वरम् ॥
7. P. आयुष्यादि for आयुरादि.
10. ABl. प्रयोग उच्यते for प्रयोगा उच्यन्ते.
14. A. प्रभाषते for परिभाष्यते.
17. P. पुष्यनक्षत्रेण युक्ते चन्द्रे, BBl. पुष्ययुक्ते चाहनि for पुष्यनक्षत्र...

## 3. आयुष्याण्येव प्रथमम् ॥ १ ॥

सा - अथ वक्ष्यमाणानां काम्यानामायुष्याधीनत्वादायुष्याण्यध्ययनानि प्रथमं विधास्यामीति प्रतिजानीते—आयुष्याण्येवेति । यतः सर्वकाम्यानामायुष्यापेक्षास्ति, यतश्चायुष्यं सर्वैरप्याशास्यम् अतः तानि आयुष्याणि आयुःसाधनान्यध्ययनानि एव प्रथमम् उच्यन्त इति शेषः ॥ १ ॥ ·

भ - आयुष्याणीति । आयुषः सर्वान् प्रत्यविशिष्टत्वादायुःसाधनान्येव सामानि प्रथमम् उच्यन्त इति ॥

**5.** **अबोध्यग्निर्** (ग्राम॰ 3.8.73.1) **महि त्रीणाम्** (ग्राम. 5. 8. 192, 1&2) **इति द्वे, त्वावत** (ग्राम. 5.8.193. 1) **इन्द्रं नरो** (ग्राम. 8.9.318.1) **ग्रामे गेयमायुरिति चास्य निधनं कुर्यात्, त्यमू षु** (ग्राम. 9. 11.332. 1 & 2) **द्वे, त्रातारमिन्द्रꣳ** (ग्राम. 9. 11. 333. 1) **हविरित्येतस्य स्थाने स्वस्ति न इति, सोमः पुनान्त्यꣳ** (ग्राम. 17.10.572.6) **ससुप्रथमं** (ग्राम. 17.11.582.1) **विश्वतो दावन्निति** (आ. गा. 3.4.74.1) **पूर्वं रहस्य उदुत्तमं वरुणपाशम्** (आ. गा. 1.3.23.1) **इत्येषोऽरिष्टवर्ग एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः शतं वर्षाणि जीवति । जरयैव विस्रꣳसते ॥ २ ॥**

सा - अथायुःसाधनप्रयोगमाह—अबोध्यग्निरिति । स्पष्टोऽर्थः ॥

भ - अबोध्यग्निरिति । इन्द्रं नरो ग्रामे गेयमायुरिति चास्य निधनं कुर्यादिति । उपा इत्येतस्य स्थाने आयुरिति निधनं कार्यमिति ।

---

2. P. वक्ष्यमाण for वक्ष्यमाणानां; Bl. (अ-)धीनतयायुष्याध्य॰ for (अ-)धीनत्वादायुष्याणि.
3. P. ॰कामनाम् for ॰काम्यानाम्.
4. ABBl. om. अपि; Bl. तस्मात् for अतः.
6. प्रत्यविशिष्टत्वाद् *See* CN.
19. A. स्पष्टानि for स्पष्टोऽर्थः ; B. om. स्पष्टोऽर्थः ॥

त्रातारमिन्द्र॰ हविरित्येतस्य स्थाने स्वस्ति न इति । हव्य(हवाइ: !)इति स्थाने स्वस्ति न इति कार्यमिति । विश्वतो दावन्निति । पूर्व रहस्यगाने विश्वतो दावन्निति द्वयोः पूर्वमिति । एषोऽरिष्टवर्गः । रिष्टमशुभमायुर्हानिकरम्, तद्विपरीतो वर्ग एषः । जरयैव विस्रंसते शरीराद्विमुच्यते । न पुनरायुः-शतवर्षलक्षणस्य मध्ये विस्रंसते । स्पष्टमन्यदिति ॥

**6. भ्राजाभ्राजे** (आ. गा. 6.1.152.1&153.1) **शुक्रचन्द्रे** (आ. गा. 3 6. 89.1 & 90. 1) **राजनरौहिणके** (आ. गा. 4.4.123. 1 & 2) **शुक्रियाचे** (आ गा. 6.1.148.1 & 149.1) **हा उ स्वरतादीनि चत्वारि सेतुषाम** (आ. गा. 2. 7. 57. 1.) **चैषः पवित्रवर्ग एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः पूतो भवति ॥**

सा - अथ शुद्धिकामस्य प्रयोगमाह — भ्राजेति । भ्राजादीनि सामानि स्पष्टानि । एषः उक्तप्रतीकः समुदायात्मकः पवित्रवर्गः सर्वपापशोधकवर्गः सामसमूह इत्यर्थः । एतेषां साम्नां मध्ये एकम् एव वा साम अनेकं द्वे त्रीणीत्यादि वा यथाशक्ति सर्वाणि वेति त्रिषु पक्षेषु एकमिच्छया सदा प्रयुञ्जानः पूतो भवति । दैनंदिनसमुद्भवैः पापैः पूतो भवतीत्यर्थः ॥

भ - भ्राजेति । निगदसिद्धमिति । शुद्धिकामः पवित्रं वर्गं प्रयुञ्जीतेति ॥

---

5. RAl. शतं for शत.

9. B. सेतुषेम for सेतुषाम.

10. My एते for एषः.

12. P. ०क्रियायाः for ०कामस्य; A. om. भ्राजादीनि.

13. AB om. एषः; A. उक्तप्रतीकतः उभयात्मकः for उक्तप्रतीकः.... A. समुपवासशोध्यक० for सर्वपापशोधक...; P. om. वर्गः.

14. P. एकम् अनेकं वा, B. एकमनेकमेव वा साम अनेकं Bl. एकमेव वानेकं for एकमेव...

15. P. वा comes after यथाशक्ति; P. om. इति and adds: विहितानि सर्वाण्यपि वा, एतेषु ; B. इच्छायां for इच्छया.

16. Bl. adds: पठ्यमानः after प्रयुञ्जानः; A. दैनंदिनस्यामतिभवैः, BBl. अनुदिनं संभवैः for दैनंदिन...; ABBl. om. इत्यर्थः.

7. बहु प्रतिगृह्य याजयित्वा वासन्नमात्मानं मन्यमानो गौषूक्ताश्वसूक्ते (ग्राम. 3.1.122. 1 & 2) शुद्धाशुद्धीये (ग्राम. 9.12 350. 1 & 2) तरत्स मन्दी-(ग्राम. 14.4. 500. 1) त्येतानि प्रयुञ्जानः पूतो भवति ॥ ३ ॥

सा - अथ बहुप्रतिग्रहबहुयाजनविषयशुद्धिकामस्य प्रयोगमाह— बह्विति । अप्रतिग्राह्यप्रतिग्रहे अयाज्ययाजने च प्रायश्चित्तस्योक्तत्वाद् अस्य काम्यप्रकरणत्वाच्च प्रतिग्राह्यस्यैव धनं स्वकुटुम्बभरणापेक्षया अधिकं प्रतिगृह्य याज्ययाजने च वा बहून् याजयित्वा वासन्नं सुकृतापगमेनोपक्षीणमात्मानं मन्यमानो गौषूक्तादीन्येतानि सामानि प्रयुञ्जानः पूतो भवतीति ॥ ३ ॥

भ - बह्विति । [अ]प्रतिग्राह्यप्रतिग्रहे अयाज्ययाजने च पूर्वमुक्तत्वात् प्रायश्चित्तप्रकरणाभावाच्च प्रतिग्राह्यवचनादपि बहु प्रतिगृह्य वृत्तेरपेक्षितादधिकं [प्रतिगृह्य] याज्यान्वा बहून्याजयित्वा शुद्ध्यर्थमेतानि प्रयुञ्जीतेति ॥ ३ ॥

8. तवश्यावीयं प्रयुञ्जानः शुचिः पूतो ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ॥ ४ ॥

सा - अथ ब्रह्मलोकप्राप्तिसाधनशुद्धिकामस्य प्रयोगमाह— तवश्यावीयम् इति । तव श्याव इत्यस्यामुत्पन्नं तवश्यावीयम् । तत् अग्ने तव श्रव (साम. ii. 1816) इत्यस्यामृचि ऊखा - (आ. गा. व्रतपर्व. 207) ग्निरस्मि (आ. गा. 5. 5. 124. 1) कपात्यग्निर् (आ. गा. 5. 5. 125. 1.) इया इन्द्रं नरो (आ. गा. 5. 5. 126. 1) भ्राजा औ हो इति इडान्तं (आ. गा. 5. 5. 127. 1) पञ्चानुगानं भवति । तत्तव-

---

2. RAl. गौषूक्तं चाश्वसूक्त for गाषूक्ताश्व०.

5. बहुविध for बहु ; P. विषयक for विषय.

6. B. om. अयाज्ययाजने...प्रतिग्राह्यस्यैव

8 A. अयाज्ययाजने च प्रायश्चित्तस्याक्तत्वात् बहून् ....; P. याज्यान्येव बहून्.. .Bl. अयाज्यान् एव बहून for याज्य०... बहून ; P. स्वकृतानपगमेन A. सुकृततापागमेन for सुकृतापगमेन.

13. TV तवश्शावीयं, A. तवश्रावीय for तवश्यावीय ; My adds भवति after पूत०.

16. A. तवश्रावा, B अग्ने- तवश्शावा for तव श्याव ; PBBl. om. तत अग्ने. .इत्युच्यत.

20. व्रतपर्वणि प्र. ५. अग्नेरिलांद पञ्चानुगानम . *See*. CN.

श्यावीयमित्युच्यते । तत् सदा प्रयुञ्जानः शुचिः पूतः च सन् ब्रह्मलोकं ब्रह्मणश्चतुर्मुखस्य लोकं, लोक्यत इति लोकः स्थानम् अभिसंपद्यते आभिमुख्येन प्राप्नोति । यद्यपि शुचित्वपूतत्वयोरेकार्थता तथापि पुरुषसंस्कारस्य मलापगमगुणाधानरूपेण द्वैविध्यात् शुचिरित्यनेन मलापगमलक्षणं पूत इत्यनेन सुकृतप्राप्तिलक्षणगुणाधानमुच्यते । न च "कर्मणा पितृलोको विद्यया देवलोकः"—इति श्रुतौ व्यवस्थितत्वात् सामाध्ययनलक्षणस्य कर्मणो विद्यात्वाभावात् कथं ब्रह्मलोकप्राप्तिसाधनत्वमिति वाच्यम् । अध्ययनेन हि चित्तशुद्धौ सत्यां सगुणोपासनद्वारा ब्रह्मलोकस्य प्राप्तुं शक्यत्वादस्य तत्साधनत्वम् । अथवा "कर्मणा पितृलोकः" इतिवदस्यापि वचनत्वाविशेषात् साक्षात्साधनत्वं न विरुध्यते । "किं हि वचनं न कुर्यान्नास्ति वचनस्यातिभारः" इति हि न्यायः । 'न च पुनरावर्तते' इति ब्रह्मलोकं प्राप्तवतां—

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मान प्रविशन्ति परं पदम् ॥"

(कू. पुराण. पू. ख. 12. 269)

इति कालात् सायुज्यमुक्तेर्विधानात् न पुनरावृत्तिः ॥ ४ ॥

भ - तवश्यावीयम् इति । द्विविधौ हि पुरुषसंस्कारौ गुणाधानेन दोषापनयनेन च । [तत्र]व्या (समा?) पादितगुणः शुचि [रिति] उच्यते । अपनीतदोषः पूत इति । स्पष्टमन्यदिति ॥

---

1. P. adds: साम after तत्; P. om. च.

2. P. om. लोकं; AB. लोकं for लोकः.

3. P. शुचिपूतशब्दयोः B. शुद्धपूतत्वयोः for शुचित्व०.

4. P. द्वैविध्यम् for द्वैविध्यात्; P. पापागमः for मलापगमलक्षण.

5. P. adds इत्यपौनरुक्तम् before उच्यते; A. तेन च कर्मणा पितृलोकविद्यया देवलोकम् for न च "कर्मणा...०लोक..

7. A. विद्यार्थाभावात् for विद्यात्वाभावात्; P. देव० for ब्रह्म; ABBl. अनेन for अध्ययनेन हि.

9. A. पितृलोकमिव इति०, B. पितृलोकवदस्यापि वाचनिकत्वाविशेषात् for पितृलोकः...वचनत्वाविशेषात्; Bl. वाचनिकत्वा० for वचनत्वा०

10. Bl. adds चित् after किं and om. हि.

15. P. मुक्ति for मुक्तेः

9. उदुत्तमं वरुणपाशमित्येतत् सदा प्रयुञ्जानः संबाधं न निगच्छति । निगतश्च प्रमुच्यते ॥

सा - अथारोग्यकामस्य प्रयोगमाह—उदुत्तममिति । उदुत्तमम् (आ. गा. 1.3.23. 1) इत्येतत् सदा नित्यकर्माविरोधेन प्रयुञ्जानः संबाधं व्याध्यादिपीडां न निगच्छति न कदाचिदपि प्राप्नोति । निगतश्च प्रमुच्यते नितरां संबाधं प्राप्तश्चानेन प्रयोगेण तस्मात् प्रमुच्यते ॥

भ - उदुत्तममिति । संबाधं व्याध्यादिभिः पीडनं, आगामिभिर्व्याध्यादिभिः संबाधं-, न निगच्छति [न] प्राप्नोति । निगतश्च प्रमुच्यते । निगतो नितरां गतश्च सन् प्रमुच्यते । गदैरिति [यावत्] ॥

10. गौरान्त्सर्षपाꣳस्तुचे तुनाय तत्सु न इत्येतेन प्राश्नीयात् । दीर्घायुर्भवति ॥

सा - अथ दीर्घायुष्कामस्य प्रयोगमाह—गौरानिति । "तुचे तुनाय तत्सु न (ग्राम. 10.5.395. 1) इत्येतेन साम्ना गौरान् सर्षपान् अभिमन्त्र्य अन्वहं प्राश्नयीयात् । दीर्घायुः शतवर्षजीवी भवति ॥

भ - गौरानिति । प्रत्यहमनेन साम्ना गौरान् सर्षपान् शुक्लान् सर्षपान् प्राश्नीयात् । शतवर्षादूर्ध्वमपि दीर्घमायुर्लभत इति ॥

---

2. My BTS. निगदः for निगतः.

3. AB om. अथ.

5. A. व्याध्यादिव्यसनं, B. व्याध्यादिपीडनवन्तं, Bl. व्याध्यादिपीडनः । तं for व्याध्यादिपीडां; B. निगदः for निगत; A om. प्रमुच्यते.

7. आगामिभिः *See* CN.

9. नितरां *See* CN; R. निगदैः for गदैः.

12. AB. om. प्रयोगम्.

13. P. om. तत्सु नः; P. एतत्साम्ना for एतेन साम्ना.

14. P. adds एतेन before दीर्घायुः.

16. R. शतं for शत; Al. दीर्घायुः for दीर्घमायुः.

**11.** त्रीन् वोदकाञ्जलीन् सदाचामेत् पिबा सोममिन्द्र मन्दतु त्वेत्येताभ्यां दीर्घायुर्भवति दीर्घायुर्भवति ॥ ५ ॥ १

सा - अत्रैव प्रयोगान्तरमाह—त्रीन्वोदकाञ्जलीनिति । सदा अन्वहमित्यर्थः । 'पिबा सोमम् (ग्राम. 10.5.398. 1 & 2) इत्येताभ्यां त्रीन् वा उदकाञ्जलीन् अभिमन्त्र्य आचामेत् पिबेत् । शिष्टमुक्तप्रायम् ॥ ५ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये
तृतीये ब्राह्मणे द्वितीयाध्याये प्रथमः खण्डः ॥ १ ॥

भ · त्रीन्वोदकाञ्जलीनिति । सदा प्रत्यहमित्यर्थः । पिबा सोममिति द्वयोः साम्नोरन्ते त्रीनुदकाञ्जलीन् प्रत्याचमनमनुमन्त्र्य आचामेत् । सिद्धं चा[न्य]त् । इति ॥ ५ ॥ १ ॥

॥ प्रथमोऽनुवाकः ॥

---

2. My TS मन्दकृत्वेत्याताभ्यां for मन्दतु...

7. A om. इति....द्वितीयाध्याये.

10. RAl. साम्नोरन्तन्ते (ते Al.) साम्नोरन्ते; RAl. अनुसंत्य for अनुमन्त्र्य.

# द्वितीयः खण्डः

1. अथ यस्या जातानि प्रमीयेरन् न्यग्रोधशुङ्गा॑ शरमूलं चोत्थाप्य तदहस्त्रिवृतं कारयेन्मणिमग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधायाबोध्यग्निरित्येतेनाभिजुहुयात् । सहस्रकृत्वः शतावरं तृतीये गर्भमासि । निदध्याद् आज्यशेषम् । मेखलायां मणिं धारयेत् । पुमा॑स॑ ह जनयति । जातस्य कण्ठेऽवसजेत् । कुमारमाज्यशेषं प्राशयेत् । सर्वाणि स्रोता॑सि तर्पयेत् । अभ्यञ्जीताहरहस्तत ऊर्ध्वम् । उपयुक्ते पुनः प्रयोगः । शतं वर्षाणि जीवति । जरयैव विस्रंसते ॥

सा - अथोत्पन्नपुत्राणाममरणं कामयमानस्य प्रयोगमाह—अथ यस्या इति । अथशब्दोऽर्थान्तरसंक्रान्त्यर्थः । यस्याः नार्याः जातानि उत्पन्नान्यपत्यानि प्रमीयेरन् मृतानि भवन्ति, तस्याः तृतीय गर्भमासि इति संबन्धः । न्यग्रोधशुङ्गान् वटशाखाग्रमुकुलान् , शरमूलं शरदण्डसाधनतृणस्य मूलं च उत्थाप्य तदहः तस्मिन् प्रयोगदिवसे उक्तद्रव्यापिष्टाभ्यां [त्रिवृतं] त्रिपर्वाणं

---

2. MBl. श्रृङ्गान for शुङ्गान.

3. RAl. त्रिवृत्तं for त्रिवृतं.

7. My कर्णे, M supra line कर्णे for कण्ठे; My MAB. विसृजेत् B. अवसृजेत् for अवसजेत्.

8. MT ASB. अभ्युञ्जीत. for अभ्यञ्जीत ; My उपयुज्यते BM STSS उपयुङ्क्ते for उपयुक्ते.

11. P. संग्रहार्थः for संक्रान्त्यर्थः ; ABBl. भार्यायाः for नार्याः.

13. A. शरदर्थकाण्ड०, B. शरदर्थदण्डान्० for शरदण्ड०

14. P. adds दिवसे after तस्मिन् ; P. उक्तद्रव्ये पिष्ट्वा ताभ्यां त्रिवृता प्रकारेण हुत्वा व्याहृतिपर्यन्तं मणिम् for उक्त०...मणिम्.

मणिं कारयेत् । अथाग्निं प्रतिष्ठाप्य आवृता पाकयज्ञप्रयोगप्रकारेण हुत्वा व्याहृतिहोमपर्यन्तं कृत्वा मणिम् अग्नेः पश्चाद्देशे निधाय अबोध्यग्निर् (ग्राम. 3.8.73 1) इत्येतेन मन्त्रेणाग्नौ अभिजुहुयात् । सहस्रकृत्वः परमावधिः शतावरं शतकृत्वोऽवरम । तदा तदोक्तवारं संपातेन मणौ जुहुयात् । एतत् तृतीये गर्भमासि कर्तव्यम् । आज्यशेषं हुतशिष्टमाज्यं बर्हिष्येव वक्ष्यमाणप्रयोगार्थं निदध्यात् संरक्ष्य स्थापयेत् । सा नारी तं हुतं त्रिवृतं मणिं मेखलायां धारयेत् । एवं कृते सा पुमांसं पुत्रं जनयति । तस्य जातस्य कण्ठे मेखलाधृतं मणिम् अवसजेत् बध्नीयात् । तत् आज्यशेषं कुमारं प्राशयेत् । तथा सर्वाणि स्रोतांसि नासिकाश्रोत्रादीनि तर्पयेत् । तेनैव आज्येन प्रीणयेत् । तत ऊर्ध्वम् एवमेव अहरहः तमाज्यशेषेण अभ्यञ्जीत । उपयुक्ते तस्मिन्नाज्यशेषे होमस्य पुनः प्रयोगः कार्यः, सहस्रकृत्वः संपातेन मणिमभि हुत्वा पुनः शेषं समापयेत् । एवं कृते उत्पन्नः पुत्रः शतं वर्षाणि जीवति । तदेवाह—जरयैव विस्रंसते इति । न तन्मध्ये स्रंसोऽस्य भवति ॥

भ अथ यस्या इति । अथेत्यर्थान्तरसंक्रान्तिद्योतकः । यस्या नार्या जातानि अपत्यानि तोकानि प्रमीयेरन् म्रियन्ते तस्याः तृतीय (ये ?)

---

1. A. पाकयज्ञप्रकारेण प्रयोगप्रकारेण for पाक०.

4. AB. om. तदा.

5. P. om. कर्तव्यम्.

6. P. om. बर्हिष्येव ; P. सरक्षं for संरक्ष्य; BBl. om. संरक्ष्य.

8. P. adds: मेखलायां प्रोतं मणिं before तस्य ; P. om. मेखलाधृतं मणिम ; Bl. अवसृजेत् for अवसजेत्.

10. A. वाजान्, BlB. द्विजान् for तेनैव आज्येन ; AB om. एवम्.

11. AB तदाज्यशेष कुमारं प्राशयेत् for तम...अभ्यञ्जीत ; PB उपयुङ्क्ते for उपयुक्ते ; BBl. आज्यशेषहोमस्य for आज्य०

12. Bl. आज्येन ; for संपातेन ; A. मणिभिर्हुत्वा for मणिम् ... ; P. सपादयेत् for समापयेत् Bl. adds: अभ्यञ्जनार्थम् after समापायेत्.

13. AB. देहं for तदेवाह.

14. AB om. इति ; P. न मध्येऽस्य विस्रंसो भवति for न तन्मध्ये . . .

15. RAl. ०संस्कारातियोतकः for संक्रान्ति०.

16. तोकानि *See* CN.

गर्भमासीतिति संबन्धः । न्यग्रोधशुङ्गान् [न्यग्रोधस्य]शाखाग्रे मुकुलाकारान् [शर]मूलं शरस्य[तृणविशेषस्य इषुद]ण्डसदृशस्य मूलं चोत्थाप्य तदहस्तस्मिन्नेवाहनि ताभ्यां पिष्टाभ्यां त्रिवृत्तं त्रिपर्वाणमेकं मणिं कारयेत् । अथ अग्निं प्रतिष्ठाप्य आवृता पाकयज्ञस्य प्रयोगेण हुत्वा व्याहृतिहोमपर्यन्तं कृत्वेत्यर्थः । मणिं तं त्रिवृत्तं पश्चादग्नेः निधाय अबोध्यग्निर् (ग्राम. 3. 8. 73. 1) इत्येतेन अभिजुहुयात् । अग्नौ हुत्वा संपातेन मणेरुपरि जुहुयात् । सहस्रकृत्वः परमं शतावरं शतकृत्वोऽवरम् । [एतत् तृतीये गर्भमा]सि । निदध्याद् आज्यशेषम् आज्य[स्य]हुतस्य शेषं वक्ष्यमाणविनियोगार्थं गुप्तं निदध्यादिति ॥

मेखलायामिति । अभिहुतं[तं]मणिं स्वमेखलायां गर्भिणी धारयेत् । सा काले पुमांसं पुत्रं जनयति इति ॥

जातस्येति । तं मणिं जनन्या मेखलाया आदाय जातस्य कुमारस्य कण्ठेऽवसृजेत् । निहितम् आज्यशेषं कुमारं प्राशयेत् । जननदिवसे सर्वाणि कुमारस्य स्रोतांसि आज्येन तेन तर्पयेत् । तत ऊर्ध्वमहरहः आज्यशेषेण अभ्यञ्जीत इति ॥

उपयुङ्क्त इति । उपयुङ्क्ते तस्मिन्नाज्यशेषम् । पुनः प्रयोगो होमस्य कार्यः । पूर्वमिव मणिमभिजुहुयात् । सिद्धः शेष इति ॥

2. अथ यो रक्षसा गृहीतः स्यादशनिहतस्य वृक्षस्येध्मः, शुक्लाया गोः सरूपवत्साया अन्यस्या वाज्यं, बैल्वं मणिमुत्थाप्य तदहस्त्रिवृतं कारयेन्मणिम् । अग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधायेन्द्र त्रिधातुशरणमित्येतेनाभिजुहुयात् सहस्रकृत्वः शतावरम् । तं मणिं कण्ठेन शिरसा वा

---

1. R. the scribe has by oversight left out the commentary form न्यग्रोधस्य शाखाग्रे to आदाय जा(तस्य) of the peragraph next after. After न्यग्रोधशुङ्गन् it reads तस्य कुमारस्य...

2. शरस्य *See* CN.

4. Al. व्याहृतिहोमोमयथात्तः for व्याहृतिहोमपर्यन्तं

7. Al. ०कृतोवार for कृत्वोऽवरम्.

19. RAl. त्रिवृत्तं for त्रिवृतं

21. My कर्णेन for कण्ठेन.

**धारयन् मुच्यते रक्षसा । यद्वा उ विश्पतिरिति चैतत् सदा प्रयुञ्जीत । स्वस्ति हास्य भवति ॥ १ ॥**

सा - अथ रक्षोगृहीतस्य प्रयोगमाह—अथ यो रक्षसेति । अथशब्दः पूर्ववत् । यः रक्षसा रक्षःप्रभृतिभिः गृहीतः स्यात् तस्य प्रयोगो वक्ष्यत इति शेषः । तस्मिन् प्रयोगे अग्निसमिन्धनाय अशनिहतस्य वृक्षस्य संबन्धी इध्मः कार्यः । होमाद्यर्थं शुक्लायाः शुक्लवर्णायाः सरूपवत्सायाः शुक्लवर्णवत्सोपेतायाः गोः संबन्धि आज्यं कार्यम् । उक्तलक्षणाया अलाभे अन्यस्याः असरूपवत्सायाः शुक्लायाः गोः संबन्धि वा कार्यम् । तदहः तस्मिन् प्रयोगदिने बैल्वं बिल्ववृक्षसंभवं मणिं तक्षणादिना उत्थाप्य संपाद्य तं त्रिवृतं कारयेत् त्रिपर्वाणं कुर्यात् । मणिमग्निमित्यादि पूर्ववत् । अत्र इन्द्रेति (ग्राम. 7. 4. 266. 1) होममन्त्रः । यद्वा उ विश्पतिः (ग्राम. 3. 12. 114. 1) इत्येतत् साम सदा सर्वदा प्रयुञ्जीत । एवं कृते रक्षआदिभिर्मुच्यते । अस्य स्वस्ति अविनाशि क्षेमं भवति ॥ १ ॥

भ - रक्षःप्रभृतिभिर्गृहीतस्य शान्तिर्वक्ष्यते—अथ यो रक्षसेति । अग्नेः समिन्धने अशनिहतस्य वृक्षस्य संबन्धीध्मः स्यात् । आज्यं शुक्लायाः सद्रू(रू?)पवत्सायाः तादृश्या अलाभे असरूपवत्साया वा स्यात् । बैल्वं बिल्ववृक्षसंभवं तक्षणाच्छिन्नं मणिरूपं कृतम् उत्थाप्य उत्पाद्य । तदहस्त्रिवृत्तमित्यादि सिद्धशेष इति ॥

---

3. A om. अथशब्दः...तस्मिन् प्रयोगे.

6. P. होमार्थं, A. होमाद्यर्थः for होमाद्यर्थं ; Bl. om. शुक्लवर्णायाः.

7. AB. संलब्धं for संबन्धि.

8. ABBl. om. अन्यस्याः; P. अशुक्लायाश्च for शुक्लायाः; AB om. वा.

9. AB. प्रयोग इति for प्रयोगदिने; B. बिल्ववृक्षस्य संभवं for बिल्व०.

10. A. कार्यम for कुर्यात्; P. इत्यवशिष्टं for इत्यादि ; P. व्रते होममन्त्र -'इन्द्र त्रिधातु शरणम' इति । for अत्र इन्द्रेति...

12. A om. साम; AB om. सर्वदा.

13. AB राक्षसादिभिः Bl. रक्षसादिभिः for रक्षआदिभिः P. अविनाशः for अविनाशि.

16. Al. असद्रप० for असरूप०

3 आमयावी कौम्भ्यं घृतं विश्वाः पृतना अभिभूतरं नर इत्येतेनाभिजुहुयात् सहस्रकृत्वः शतावरम् । जीवेति चास्य निधनं कुर्यादेतेनैव सदा प्राश्नीयात् । मुच्यते आमयावी । आनो मित्रावरुणेति चैतत् सदा प्रयुञ्जीत । स्वस्ति हास्य भवति स्वस्ति हास्य भवति ॥ २ ॥ २ ॥

सा - अथ रोगशान्तिकामस्य प्रयोगमाह—आमयावीति । आमयो रोगस्तद्वान् आमायावी । कौम्भ्यं कुम्भे निहितं घृतम् । विश्वाः पृतनाः अभिभूतरं नरः (ग्राम. 9.3.370.1) इत्येतेन मन्त्रेण सहस्रकृत्वः सहस्रसंख्यापर्यन्तं शतावरं शतसंख्ययान्यूनं वा यथासंभवं द्विशतत्रिशतादिकं वा अभिजुहुयात् । अस्य मन्त्रस्य अन्ते जीवेति निधनं कुर्यात् । एतेनैव कौम्भ्यघृतेनाहुतिशिष्टेनैवाक्तमन्नं सदा भोजनकाले प्राश्नीयात् । एवं कृते आमयावी व्याधिभ्यो मुच्यते 'आ नो मित्रा' (ग्राम. 6.11.220.1) इत्यादि स्पष्टम् ॥ २ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये द्वितीयः खण्डः ॥ २ ॥

भ - आमयावीति । आमयावी महारोगी । कौम्भ्यं कुम्भे निहितम् । संपातेनाभिजुहुयात् । अथापरमग्निं प्रतिष्ठाप्याव्रृता हुत्वेत्यवचनात् संपातेन विना कौम्भे घृत एव होम इति । होमश्च 'विश्वाः पृतनाः' (ग्राम. 9.3.370.1) इति । त्रैशोकस्य च निधनं दि(दी?)वेति स्थाने जीवेति । एतेन अभिहुतेन कौम्भेन घृतेनापसिच्य सदा अन्नं प्राश्नीयात् सिद्धप्रायमितरदिति ॥ २ ॥ २ ॥

॥ द्वितीयोऽनुवाकः ॥

---

4. MTBALR. आदानो० for आ नो०; P. वा for च.
5. P RAl. om. second स्वस्ति हास्य भवति.
6. P. उपशान्ति० for शान्ति०
9. AB अनूनं for अन्यूनं; P. om. second वा.
11. P. कौम्भ्येन हुतविशिष्टेनैवाक्तम् for कौम्भ्य०...
12. AB. आमयावित्वात् for आमयावी व्याधिभ्यः
14. A. om. इति...द्वितीयाध्याये.

# तृतीयः खण्डः

**1. अथ यदस्य रुजेच्छन्नो देवीरहस्येन घृतमभिगीयाभ्यञ्ज्याच्छाम्यति ह ॥**

सा - अथ क्षुद्ररोगशान्तिकामस्य प्रयोगमाह—**अथ यदस्येति** । उक्तोऽथशब्दार्थः । **अस्य** अधीतसामरहस्यस्य यजमानस्य संबन्धि **यद्** अङ्गं **रुजेत्** व्यथयेत्—सामर्थ्यादामय इति लभ्यते तस्यापनुत्तये **"शान्नो दवीः"** (आ. गा. 1.2.11.2) इत्यस्यां गीतेन **रहस्येन घृतमभिगीय** अभिमृज्यमानं घृतमभि गीत्वा, तेन घृतेन **अभ्यञ्ज्यात्** । प्रतिदिनं तथा कृते तस्य शान्तिर्भवति ॥

भ - **अथ यदस्येति** । अथेति व्याख्यातम् । **यत्** यदि **अस्य** अधिकारिणोऽधीतसामवेदस्य **रुजेत्** रोगो जायेत महारोगव्यतिरिक्तः । 'शन्नोदेव्यां' गीते[न] **रहस्येन घृतमभिगीय** अभिमृज्यमानमाज्यमभिगी[य] ते[न] घृतेन **अभ्यञ्ज्यात् शाम्यति ह** रोग इति ॥

**2. द्विकाद्येन वोदकं पाययेच्छीताभिरद्भिरभिषेचयेत्सोमꣳराजानꣳ(ग्राम. 3.10.91.1)सनादग्नेऽ (ग्राम. 3.8.80.1) ग्निꣳ होतारम् (ग्राम. 12.12.465.1-2) इत्येतानि चैनमभिश्रावयेच्छाम्यति ह ॥**

---

3. P. अभ्यज्ञात् for अभ्यञ्ज्यात्.

5. ABBl. ०शब्दः for ०शब्दार्थः; ABBl. यद्यद् for यद्.

6. Bl. ०र्थ्याक्षमं लभ्यते for ०र्थ्यादामयः...; ABBl. add स befor तस्य.

7. A. अभिमृज्यमानं गीतं तथा; Bl. अभ्यज्यमानं...B. अभ्यज्यमानमहि अन्तथा P. घृतमाज्यं मृज्यमानमभिगायेत्, तथा घृतमभिगीत्वा for अभिमृज्यमानं...

8. P. अभ्यज्ञात् for अभ्यञ्ज्यात्.

12. अभिमृज्यमानम् *See* CN.

16. My. एतेन for एतानि.

सा - अथात्रैव प्रयोगान्तरमाह—**द्विकाद्येनेति** । अयं प्रयोगोऽनधीतसामाध्ययनस्य । **द्विकाद्यं** "शन्नो देवीः" (ग्राम. 1. 3. 33. 1) इत्यस्यां गीतयोः प्रथमं, तेन अभिमन्त्रितम् **उदकं रुग्णं पाययेत्** । वाशब्दः पूर्वप्रयोगेण विकल्पार्थः । **'सोमं राजानम्'** (ग्राम. 3. 10. 91. 1) इत्येतेन शीतोदकैः **अभिषेचयेत्** । शिष्टमुक्तप्रायम् । उदकपानाभिषेचनापेक्षया **एतानि च इति** चशब्दः ॥ १ ॥

भ - अथानन्तरप्रयोगान्तरमाह—**द्विकाद्येनेति** । एतच्च अनधीतसाम्नो रोगिणोऽन्येन सामगेन कार्यं **द्विकाद्यं** 'शन्नो देव्यां' (ग्राम. 3.1. 33. 1) गीतयोः ग्रामे गेययोः प्रथमम् । फल(स्फुट ?)मन्यदिति ॥

**3. शङ्खपुष्पीं सर्पसुगन्धां चोत्थाप्य तदहस्त्रिवृतं कारयेन्मणिमग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाय चर्षणीधृतम्** (आ. गा. 2. 5. 33. 1-3) **इति वर्गेणाभिजुहुयात् सहस्रकृत्वः शतावरम् । तं मणिं कण्ठेन शिरसा वा धारयतो न सर्पभयं भवति । कयानायां च सर्पसाम** (आ. गा. 2. 7. 56. 1) **सदा प्रयुञ्जीत । स्वस्ति हास्य भवति ॥ २ ॥**

सा - अथ सर्पभयपरिहारकामस्य प्रयोगमाह—**शङ्खपुष्पीमिति** । कदाचिदपि सर्पभयं मे मा भूदिति य इच्छेत्, सः **शङ्खपुष्पीं सर्पसुगन्धां** बिल्वपत्रसदृशक्षुद्रपत्रोपेतां विषहरणप्रयोगप्रसिद्धाम् ओषधिं च पिष्ट्वा **त्रिवृतं**

---

1. Bl. AB om. अथात्रैव.
2. P. द्विकाद्येन for द्विकाद्यं.
3. PBl. प्रथमेन for प्रथमं तेन; P. उष्णं for रुग्णं.
5. AB अभिषिञ्चेत् for अभिषेचयेत्; B. अपेक्ष्य for अपेक्षया B. एतानीति चेति for एतानि च इति.
10. P. वा for च ; RAl. त्रिवृत्तं for त्रिवृतं.
13. My कर्णेन for कण्ठेन.
14. MBl. कयानीयायां for कयानायां.
18. ABl. मारण for हरण; A. एतां BlB. एतद्द्वयं for ओषधिं; and ABBl. om. पिष्ट्वा.

मणिं कृत्वा अग्निं प्रतिष्ठाप्य इत्याद्युक्तम् । तं मणिं कण्ठे शिरसि वा धारयेत् । तदाप्रभृति **कयानायाम्** (आ. गा. 2. 7. 56. 1) उत्पन्नं **सर्पसाम सदा** यथाशक्ति **प्रयुञ्जीत ।** एवंकृते विषप्रसङ्गरहितः सन् **स्वस्ति** क्षेमं प्राप्नोति ॥ २ ॥

भ - अथ स्तम्भनप्रयोगमाह— शङ्खपुष्पीमिति । सर्पसुगन्धा नाम बिल्वपत्रसदृशानि क्षुद्राणि पत्राणि यस्या विद्यन्ते सा काचिदोषधीः विषहरणसुप्रसिद्धा । तां शङ्खपुष्पीं च पिष्ट्वा त्रिवृत्तम् अग्निं (मणिं ?) कल्पयेत् । सिद्धप्रायमितरदिति ॥

कयानायामिति । एतत् पूर्वोक्तं मणिं धारयता कार्यम् । समुच्चयाभिधायिचकारस्य दर्शनात् । इति ॥ २ ॥

**4. श्वेतपुष्पां बृहतीमुत्थाप्य तदहस्त्रिवृतं कारयेन्मणिमग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाय मोषु त्वा वाघतश्च न** (ग्राम. 7. 6. 284. 1) **इत्येतेनाभिजुहुयात् सहस्रकृत्वः शतावरम् । तं मणिं कण्ठेन शिरसा वा धारयतो न शस्त्रभयं भवति । यत इन्द्र भयामहे** (ग्राम. 7. 5. 274. 1) **इति चैतत् सदा प्रयुञ्जीत । स्वस्ति हास्य भवति ॥ ३ ॥**

सा · अथ शस्त्रभयनिवृत्तिकामस्य प्रयोगमाह—श्वेतपुष्पामिति । पूर्ववद्योज्यम् ॥ ३ ॥

---

1. ABBl. om. अग्निं प्रतिष्ठाप्य इत्याद्युक्तम् । तं मणिं; Bl. कण्ठेन शिरसा for कण्ठे शिरसि.

2. P. उपरि for उत्पन्नं.

3. P. adds. ह after स्वस्ति; A. after प्राप्नोति BBl. add. शिष्टं स्पष्टम्.

6. RAl. विषं हरत् for विषहरण.

13. My कर्णेन for कण्ठेन.

14. My शस्त्रि० for शस्त्र०.

15. A. om. च.

16. AB. बाधा for भय.

17. BB.l स्पष्टोऽर्थः for पूर्ववद्योज्यम; A. om. पूर्ववद्योज्यम् and adds:—सर्वथा शस्त्रेण भयं मा भूदिति य इच्छेत् तस्य श्वेतपु—त्रिवृतं मणिं कृत्वा शिरसि कण्ठे वा धारयतो यजमानस्य मोषु त्वा वाघतश्च नेत्यस्यामुत्पन्नमाद्यं साम गायतः शस्त्रबाधानिवृत्त्या स्वस्ति भवति ॥

भ - श्वेतपुष्पां बृहतीमुत्थाप्येत्यादि स्वस्तिहास्य भवतीत्यन्तं शस्त्रस्तम्भनप्रयोगविधानं सिद्धप्रायमिति ॥

**5. श्वेतपुष्पमर्कमुत्थाप्य तदहस्त्रिवृतं कारयेन्मणिमग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाय स्वाशिरामर्केणा-(आ. गा. 1.3.16.1)भिजुहुयात् सहस्रकृत्वः शतावरं॒स्तं मणिं कण्ठेन शिरसा वा धारयन् बह्वन्नो भवति ॥**

सा - अथ बह्वन्नकामस्य प्रयोगमाह—श्वेतपुष्पमर्कमिति । स्पष्टोऽर्थः ।

भ - अथ बह्वन्नकामस्य प्रयोगः—श्वेतपुष्पमर्कमुत्थाप्येत्यादिनोक्तः । अर्थश्च स्फुट एवेति ॥

**6. दीर्घतमसोऽर्कोऽ-(आ. गा. 1-3 17.1) र्कशिरोऽ-(आ. गा. 1.3.22.1) र्कग्रीवा (आ. गा. अर्कपर्व. 39) इति चैतानि प्रयुञ्जानः सर्वत्रान्नं लभते ॥**

अथ भिक्षुकस्य सर्वत्रान्नकामस्य प्रयोगमाह—दीर्घतमसोऽर्क इति । स्पष्टोऽर्थः ॥

भ - अथ भिक्षुवृत्तेराह—दीर्घतमसोऽर्क इति । स्पष्टोऽर्थ इति ॥

**7. समन्या यन्तीनिधनं प्रयुञ्जानो न पिपासया म्रियते ॥ ४ ॥**

सा - अथ पिपासाभावेच्छोः प्रयोगमाह—समन्या यन्तीति । समन्या यन्ति(आ. गा. 4. 3. 109. 2) इत्यत्रोत्पन्नम् 'ई' इति निधनं यस्य तत् साम सदा प्रयुञ्जानस्य न पिपासया मरणं भवति ॥

---

7. A om. अथ and adds दरिद्रस्य ; AB प्रयोगः for प्रयोगम् and om. आह.

13. P om. भिक्षुकस्य.

16. My AB. यन्तीति निधनं for यन्तीनिधनं.

19. Bl. om. second इति.

20. ABBl. om. यस्य तत् साम.

भ - ईति [नि]धनं समन्या यन्ति (आ. गा. 4. 3. 109. 2) इत्येतन्नित्यं प्रयुञ्जानो न पियासायां म्रियते। पिपासा मरणकाले तस्य न स्यादित्यर्थः। इति ॥

**8. इष्टाहोत्रीयं** (ग्राम. 4.4.151.1) **प्रयुञ्जानो नाप्सु म्रियते ॥ ७ ॥**

सा - अथाप्सु मरणाभावेच्छोः प्रयोगमाह—**इष्टाहोत्रीय**मिति। स्पष्टम् ॥ ५ ॥

भ - इष्टाहोत्रीयमित्याद्यास्त्रयः प्रयोगाः स्पष्टाः ॥

**9. अचोदस इति तृतीयं** (ग्राम. 16.9.555.3) **प्रयुञ्जीत नैनं यक्ष्मा गृह्णाति ॥ ६ ॥**

सा - **आमयावी कौम्भ्यम्, अथ यदस्य रुजेत्**—इत्यादिना अवान्तररोगस्य शरीरैकदेशरोगस्यैव प्रयोग उक्तः। अथ **अचोदस** (ग्राम. 16.9.555.3) इत्यादिना क्षयादिरोगस्य प्रयोग उच्यते—**अचोदस इती**ति। स्पष्टोऽर्थः ॥ ७ ॥

**10. त्वमिमा ओषधीर्** (आ. गा. 4.1.98.1)**इत्येतत्सदा प्रयुञ्जानो न गरेण म्रियते ॥**

सा - अथ विषमरणाभावकामस्य प्रयोगमाह—**त्वमिमा** इति। गरः कृत्रिमविषम्, तेन उक्तसामानुष्ठातुर्न कदाचिदपि मृतिर्भवति ॥

---

6. AB प्रयोगः for प्रयोगमाह.

10. TAS प्रयुञ्जानः for प्रयुञ्जीत.

11. A. राजयक्ष्माभावेच्छोः प्रयोगः—अचोचदस इति। तृतीयं सामराजं प्रयुञ्जानं यक्ष्मा—for आममावी...स्पष्टोऽर्थः ॥ ; P. आभ्यां Bl. आदीनां for आदिना.

13. B. रुग्णस्य for रोगस्य.

17. AB प्रयोगः for प्रयोगमाह.

18. P. कदापि for कदाचिदपि.

भ - गरं कृत्रिमं विषमिति ॥

11. सं ते पयांसीति पूर्वेण प्रथमं ग्रासं ग्रसेदुत्तरेण निगिरेद् विषमप्यस्यान्नं भवति । नैनꣳ हिꣳसति । नैनꣳ हिꣳसति ॥ ७ ॥ ३ ॥

सा - अथ निर्विषीकरणप्रयोगमाह—सं ते पयांसीतीति । सं ते पयांसी(साम. i. 603)ति अस्यामुत्पन्नेन पूर्वेण साम्ना (आ. गा. 4.1.97.1.) भोजनकाले प्रथमं ग्रासं ग्रसेत् आस्ये निक्षिपेत् । उत्तरेण साम्ना (आ. गा. 5. 5. 130. 1) निगिरेत् उदरान्तरं प्रवेशयेत् । एवं कृते सति अस्य भोक्तुः विषमपि अन्नम् अन्नवत्पुष्टिकरं भवति । एनं प्रयोक्तारं न हिंसति न कदाचिदपि हिनस्ति ॥

द्विरुक्तिः खण्डसमाप्तिद्योतनार्था ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये तृतीयः खण्डः ॥ ३ ॥

भ - सं ते पयांसीतीति । भोजने प्राप्ते प्रथमं ग्रासं पूर्वेण ग्रसेदास्ये निक्षिपेत् । उत्तरेण निगिरेदन्नमुदरं प्रवेशयेत् । अस्य भोक्तुर्विषमप्यन्नमन्नवत्पुष्टिकरं भवति । नैनं भोक्तारं हिंसति हिनस्ति ॥ ७ ॥ ३ ॥

॥ तृतीयोऽनुवाकः ॥

---

3. TA. निगरेत् for निगिरेत्.

5. AB निर्विषकारणप्रयोगान्तरम् for निर्विषी...

7. P. trans. भोजनकाले after ग्रसेत्; P. वदने for आस्ये.

8. A. निगरेत् for निगिरेत् P. अन्तरान्तरं for उदरान्तरं; P. प्रविशेत् for प्रवेशयेत्.

11. AB om. खण्ड.

12. AB om. इति...द्वितीयाध्याये.

15. RAI. निगरेत् for निगिरेत्.

## चतुर्थः खण्डः

**1. करवीरदण्डमुत्थाप्य देवव्रतैरभिजुहुयादनुगानशस्तेन हस्तगतेन यत्र क्व च गच्छति सर्वत्र हास्य स्वस्ति भवति ॥**

**सा** - अथ सर्वत्र क्षेमकामिनः प्रयोगमाह—**करवीरदण्ड**मिति । क्षेमकामी **करवीरदण्डम् उत्थाप्य** संपाद्य **देवव्रतैः** (आ॰ गा. 212-214) सामभिः अग्नौ हुत्वा तत्संस्रवैर्दण्डस्योपरि **अभिजुहुयात्** । ततस्तमभिमृश्य तैरेवानुगायेत् । अत्रापि सहस्रकृत्वः शतावरं होमः सामगानं चेति द्रष्टव्यम् । एव**मनुगानशस्तेन** अनुगानेन प्रशस्तेन **हस्तगतेन** दण्डेनोपलक्षितो **यत्र क्वच गच्छति** तत्र **सर्वत्र हास्य स्वस्ति** अविनाशि क्षेमं भवति ॥

**भ** - **कवीरदण्ड**मिति । करवीरदण्डेऽग्नेः समीपे स्थापिते देवव्रतैर्होमस्य संस्रावेणाभिजुहुयात् । ततस्तदभिमन्त्र्य सामानि गायेद् देवव्रतानि । तेन प्रयोगेण **शस्तेन** प्रशस्तेन हस्तगतेन [दण्डेन]उपलक्षितो **यत्र क्व च** गच्छति तत्र **सर्वत्रास्य स्वस्ति** भवति ॥ इति ॥

**2. तेन नगरं वा निगमं वा ग्रामं वा गोष्ठं वागारं वा मनसा ध्यायन् परिलिखेन्नात्रानिष्टाः प्रविशन्ति ॥**

**सा** - अथोक्तप्रयोगविशिष्टस्य दण्डस्य नगरादिरक्षणे विनियोगमाह—**तेन नगरं वे**ति । तेन होमानुगानाभ्यां प्रशस्तेन करवीरदण्डेन नगरादीनामन्य-

---

7. P. संस्रवेण for संस्रवैः ; AB तदभिमुच्य for तमभिमृश्य.
8. P. adds: गायेत् । after शतावरं; P. होममनु गानं for होमः सामगानं.
10. P. अविनाशः क्षेमः for अविनशि क्षेमं.
11. ABBl. adds एव after भवति.
13. RAl. after अभिमन्त्र्य add अनुगानश इति.
18. ABBl. om. अथ ; ABBl. om. दण्डस्य.
19. A. शस्तेन for प्रशस्तेन.

तमं भयोपद्रुतं च रक्षितुमिच्छेत्, तं मनसा ध्यायन् चौरादिभ्यो रक्षास्त्विति चिन्तयन् परिलिखेत् बहिः परितो लेखां कुर्यात् । तथा सति अत्र रेखायुक्ते नगरादौ अनिष्टा अनीप्सिताश्चोरादयो न प्रविशन्ति ॥

भ - तेन नगरं वेति । तेन अभिहोमानुगानाभ्यां शस्तेन करवीरदण्डेन नगरादीन् परिलिखेत् बहिः परितः सर्वतो लिखेत् । अत्र नगरादिषु अनिष्टाश्चौरपिशाचादयो न प्रविशन्ति ॥ इति ॥

**3. प्रतिभयेऽध्वनि देवव्रतमाद्यं गीत्वा मध्यमावर्तयेत् । गतेऽध्वन्युत्तमं समापयित्वा विरमेत् ॥**

सा - संप्राप्तभये मार्गे प्रयोगमाह—प्रतिभये इति । प्रतिभये संप्राप्तभये अध्वनि मार्गे प्राप्ते सति देवव्रतमाद्यं (आ. गा. 212.) साम सकृद् गीत्वा, गमनकाले मध्यमं देवव्रतम् (आ. गा. 213) आवर्तयेत् आवर्तयन्नेव मार्गं गच्छेत् । अध्वनि गते अतीते सति उत्तमं अन्तिमं देवव्रतं (आ. गा. 214) समापयित्वा विरमेत् । एवं स विरामं कुर्यात् । एवं कृते मार्गे प्राप्तमपि भयं निवर्तत एव ॥

भ - प्रतिभय इति । प्रतिभये भयावहे अध्वनि गच्छन् मार्गप्राप्तो देवव्रतानामाद्यं सकृद् गीत्वा, अध्वनि मध्यमं देवव्रतमावर्तयेत् । प्रतिगच्छन् मार्गप्राप्तो देवव्रतं समापयित्वा तेन जपं समाप्येत्यर्थः । ततो जपाद् विरमेत् [ए]तदुक्तं भवति—आद्यं देवव्रतं सकृज्जपित्वा मध्यममावर्तयतो नाध्वनि पीडा जायते । प्रतिभयदेशेऽतिक्रान्ते अन्त्यं देवव्रतं जपित्वैव विरमेदिति ॥

---

1. Bl. ०दिभी रक्षा तेऽस्त्विति for ०दिभ्यो रक्षास्त्विति.

2. P. लेखं for लेखां; P. नात्रानिष्टाः प्रविशन्ति ॥ for तथासति... प्रविशन्ति ॥

9. P. अथाध्वनि भयनिवृत्त्यर्थे for संप्राप्तभये मार्गे.

10. ABBl. तमापाद्य देवव्रतानाम् for प्राप्ते सति देवव्रतम्.

11. AB om. आवर्तयेत्.

12. ABBl. om. गते, सति and अन्तिमं.

13. P. अवसानं, एव साम for एवं स विरामं; Bl. चिरं मार्गे for विरामं.

14. P. अति for अपि; P. निवर्ततेव for निवर्तत एव.

4. उद्यतशस्त्रान् शत्रून् दृष्ट्वा देवव्रतानि (आ. गा. 212-214) मनसा ध्यायन्नैनꣳ हिꣳसन्ति ॥

सा - अथ भयकारिणां शत्रूणां प्रत्यक्षदर्शने सति तदपगमोपायमाह— उद्यतशस्त्रानिति । स्पष्टोऽर्थः ॥

भ - उद्यतशस्त्रानिति । स्पष्टोऽर्थ इति ॥

5. अमानुषे भये कयानायास्तृतीयम् (ग्राम. 5. 6. 169.3) आवर्तयेन्नैनꣳ हिꣳसन्ति ॥

सा - देवाद्युत्थितभयनिवारणं प्रयोगमाह—अमानुष इति । विशदोऽर्थः ॥

भ - अमानुषे भये व्याघ्रादौ संनिहिते कया[नायास्तृतीय]म् (ग्राम. 5.6.169.3) आवर्तयेत् ॥

6. अध्वानमभ्युत्थित आमन्द्रैरिति वर्गं गीत्वानपेक्षमाणो व्रजेत् । स्वस्त्यर्थचरितः पुनरैति नाध्वनि च प्रमीयते ॥

सा - अथार्थार्थमध्वानं गच्छतः क्षेमेण सार्थं पुनरागमनकामस्य प्रयोगमाह—अध्वानमिति । अध्वानं गन्तव्यं मार्गम् अभ्युत्थितः अभिक्रमणाय तिष्ठन् आमन्द्रैर् (ग्राम. 6.2.246. 1-3) इति वर्गं गीत्वा अनपेक्षमाणः अतीतं मार्गं पुनर्गमनाय अनाकाङ्क्षमाणो व्रजेत् । स्वस्त्यर्थचरितः क्षेमविशिष्टार्थाचरणः सन् पुनः स्वगृहम् ऐति आगच्छति । नाध्वनि च प्रमीयते अर्थोऽपि न नश्यति ॥

---

3. BlB. अप० for भय०.
6. Bl. कयानीयातृ० for कयानायास्तृ०.
13. AB. अनवेक्षमाण, अलक्ष्यमाणः for अनपेक्षमाणः.
15. P. अर्थाद्यर्थम् for आर्थार्थम्, A Bl. om. सार्थं, B. सार्धं for सार्थं;
18. A adds अर्थपरः after अनाकाङ्क्षमाणः;
19. P. लक्षणः for आचरणः; ABBl. om. आगच्छति.
20. P. पथि for अर्थोऽपि.

भ - अर्थार्थिनोऽध्वानं गमिष्यतोऽर्थसिद्धये पुनरागमनाय च पर्याप्तं प्रयोगमाह—अध्वानमिति । स्पष्टोऽर्थ इति । अनपेक्षमाणो व्रजेदिति । छन्नत्वरया गतमध्वानं नावेक्षेतेति । स्पष्टमितरदिति ॥

**7. अन्यो वैनमनुगायेत् । कदाचनस्तरीरसीत्येतेन चैनमभिश्रावयेत् । अर्द्धसाम्नि प्रदक्षिणमावर्त्तयेत् । समाप्यानवेक्षमाणः परो व्रजेत् । स्वस्त्यर्थंचरितः पुनरैति । नाध्वनि च प्रमीयते ॥**

सा - अथानधीतसामकस्य प्रयोगमाह—अन्यो वैनमिति । अन्यो वा सामाध्येता कश्चिद् एनं अनधीतं अर्थार्थं गन्तारम् अनुगायेत् । किं गायेत् ? पूर्वोक्तमिति गम्यते । किंच कदाचनेत्येतेन साम्ना (ग्राम॰ 8. 7. 300. 1) एनमभिश्रावयेत् । उक्तसाम समाप्य अर्थार्थिनम् अनवेक्षमाणः परः प्रयोक्ता एक एव व्रजेत् स्वगृहम् । स न गच्छेदित्यर्थः । शेषं स्पष्टम् ॥

केचिदेवमाहुः—समाप्य व्रजेदिति पूर्वकालतामात्रे क्त्वाप्रत्ययः न समानकर्तृकत्वेऽपि । अतः पर इत्येतत् न प्रकृतादन्यमाचष्टे किं तु तस्मात् परमन्यमर्थिनम् । एवं च समाप्ते साम्नि परोऽर्थी गच्छन् गन्तारमन्यमर्थार्थिनमनवेक्षमाणो गच्छेत् ॥ इति ॥

---

4. ABBl. एतानि for एतेन.

6. P RAl. अनपेक्षमाणः (RAl in comm. अनवे॰.), V. अलक्ष्यमाणः for अनवेक्षमाणः ; My MTAB एति for ऐति.

10. ABBl. एतानि सामानि for एतेन साम्ना.

11. P. adds गानं after साम ; P. अनपेक्षमाणः for अनवेक्षमणः; AB परोक्तैकः for प्रयोक्ता एकः.

12. B. सह for सः, Bl. सधनं for स न.

14. ABBl. om. अपि ; AB. इत्येवं न च for इत्येतत् न ; Bl. एवं for एतत् and after एवं om. न प्रकृताद्.... ...न्यम् ; P. सामप्रयोक्तुः for तस्मात्.

15. Bl. अर्थार्थिनम for अर्थिनम् ; P. अर्थार्थी for अर्थी.

16. PBl. अनपेक्षमाणः for अनवेक्षमाणः.

भ - अनधीतसाम्नः प्रयोगमाह—अन्यो वैनमिति । अन्योऽधीतसामा छन्दोगः एनं गच्छन्तम् अनुगायेत् । कदाचनेति साम्ना (ग्राम. 8.7.300.1) एतम् अभिश्रावयेत् । अभिश्रावमन्त्रस्य साम्नोऽर्द्धे प्रयुक्ते एतं प्रदक्षिणमावर्तयेत् परिगमयेत् । समाप्य सामशेषमेनं गच्छ[न्तमन]वेक्षमाणः परोऽन्यो गातापि व्रजेत् गच्छेन्मार्गान् । अर्थार्थी तु एवं कृते स्वस्त्यर्थचरितः पुनरैति ॥ इति ॥

अपर आह—समाप्य व्रजेदिति पूर्वकालक्त्वाप्रत्ययः असमानकर्तृकत्वेऽ[पी]ति । पर इति न प्रकृतादन्यमाचष्टे किंतु तस्मात् परमन्यमर्थार्थिनम् । समाप्ते साम्नि परोऽर्थी गच्छेन्न गातारमवेक्षमाणो व्रजेद् इति ॥

**8. एषो उषा अपूर्व्येति संविशन् सदा प्रयुञ्जीताकालꣳ स्वस्त्ययनम् । उदिते यदद्य कच्च वृत्रहन्नित्याकालꣳ स्वस्त्ययनम् ॥ १ ॥**

सा - अथ रात्रावहनि च स्वस्त्ययनकामस्य प्रयोगमाह—एषो उषा इति । एषो उषा अपूर्व्येति (ग्राम. 5.7.178.1) एतत्साम रात्रौ सदा नित्यं संविशन् शयनं कुर्वन् प्रयुञ्जीत । तथा कृते आकालं पुनरुदयकालपर्यन्तं स्वस्त्ययनं क्षेमप्राप्तिर्भवति । उदिते च सूर्ये यदद्य कच्च वृत्रहन्निति (ग्राम. 3.2.126-1) एतत्साम सदैवाहनि प्रयुञ्जीत । तथा सति आकालं पुनरस्तमयकालपर्यन्तं स्वस्त्ययनं भवति ॥ १ ॥

भ - एषो उषा अपूर्व्येति । संविशन् शयान एतत्साम सदा प्रतिदिनं प्रयुञ्जीत । एतद् आकालम् उत्थानकालात् पूर्वं स्वस्त्ययनं स्वस्ति क्षेमस्य प्रापणम् इति ॥

---

1. प्रयोगमाह *see* CN.

4. अनवेक्षमाणः *see* CN.

7. RAl. प्रकृतम् for प्रकृताद्.

12. ABBl. om. अथ.

13. P. सदा सर्वदैव रात्रौ for रात्रौ...नित्यं ; Bl. om. सदा नित्यं.

14. P. तथा सति for तथाकृते; ABBl. om. ०काल०

15. AB om. स्वस्त्ययनं; A. तथा यदद्य इत्येतत् साम उदिते भास्वति प्रयुञ्जीत । (BlB follow A. but after भास्वति add. उदयं गच्छति सति सदा) for उदिते. . . प्रयुञ्जीत.

17. B. om. ०काल०

उदिते यदद्येति । संवेशनादुत्थितः पूर्वाह्ण उदिते सूर्ये यदद्येति प्रयुञ्जीत । तत्र आकालं संवेशकालात् पूर्वं स्वस्त्ययनमिति ॥ १ ॥

9. मूलफलैरुपवसथं कृत्वा मासमुपवसेदरण्ये निस्तान्तवो मुनिर्या रौहिणी वा पौषी वा पौर्णमासी स्यात्तदहरुद्यन्तमादित्यमुपतिष्ठेतोद्वयं तमसस्परीत्येतेन । तत ऊर्ध्वं तद्व्रतस्तद्भक्षश्चत्वारि वर्षाणि प्रयुञ्जानो जरामृत्यू जहाति जरामृत्यू जहाति ॥ २ ॥ ॥ ४ ॥

सा - अथ जरामृत्युजयप्रयोगमाह—मूलफलैरिति । मूलैः फलैर्वोभयैर्वा उपवासदिनयोग्यम् उपवसथं, तेन शरीरनिर्वाहं कृत्वा मासं मासपर्यन्तम् अरण्ये उपवसेत् । निस्तान्तवः तन्तुनिर्मितं वस्त्रं तान्तवम् । तेन रहितोऽजिनवल्कलाद्याच्छन्नः मुनिः वाङ्नियमोपेतः सन् । या रौहिणी वा रोहिणीनक्षत्रयुक्ता वा पौर्णमासी पौषी वा पुष्यनक्षत्रोपेता वा स्यात् भवेत्, तदहः तयोरेकस्मिन्दिने उद्यन्तमादित्यम् उद्वयं तमसस्परीत्येतेन साम्ना (आ. गा. परिशिष्टम् . 5.6) उपतिष्ठेत । तत ऊर्ध्वं तद्व्रतः उक्तनि-

---

3. B. प्रवसेत् for उपवसेत्.

4. A SB रोहणी for रौहिणी *See* CN.

6. My पर्वाणि for वर्षाणि.

8. AB. om. अथ.

9. P. मूलफलैः for उभयैः; P. उपवसथं दिनेऽल्पभोजनमुपवसथम् for उपवासदिनयोग्यम् उपवसथम्;

A. the palm leaves 91&92 containing the commentary and text from मासपर्यन्तम् to. उच्चा ते इति अस्य are missing. It begins after this lapse with नवमदशमे द्वे, एवं...which is the commentary on नवमदशमे एतेषामेकमनेकं वा...(2. 6. 1).

11. P. अनपिहितः, Bl. विरहितः for रहितः ; Bl. आच्छादितः for आच्छन्नः.

12. B om. स्यात्.

14. BBl. add, एवं मासव्रती भूत्वा before तत ऊर्ध्वम्.

स्तान्तवमौनव्रतोपेतः । तद्भक्षः उक्तमूलफलभक्षः सन्, चत्वारि वर्षाणि एवं प्रयुञ्जानः जरामृत्यू जहाति न कदाचिज्जरामरणे प्राप्नोति इत्यर्थः ॥

अभ्यासः खण्डसमाप्त्यर्थः ॥ २ ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये चतुर्थः खण्डः ॥ ४ ॥

भ - अथ जरामृत्युहाने कारणं प्रयोगमाह—मूलफलैरुपवसथं कृत्वे-त्यादिनानुवाकशेषेण । मूलफलैः प्राणयात्रां कृत्वा मासमरण्ये उपवसेत् । निस्तान्तवः तन्तुनिर्मितं वस्त्रं तान्तवं तद्रहितः, वल्कलान्यजिनानि वा वसानः मुनिर्वाग्यतः । रौहिणी रोहिणीयुक्ता या पौर्णमासी पुष्ययुक्ता वामावास्या तदहस्तस्मिन्नहनि उद्यन्तमादित्यम् उद्वयम् (आ॰ गा॰ परि-शिष्टम्. 5.6) इत्युपतिष्ठेत । तत ऊर्ध्वं चत्वारि वर्षाणि तदेव स प्रयुञ्जानः तद्व्रतः निस्तान्तवो मुनिरित्येतेन व्रतेन युक्तः, तद्भक्षः फलमूलभक्षः सन् जरामृत्यू जहाति ॥ २ ॥ ४ ॥

॥ चतुर्थोऽनुवाकः ॥

---

2. P. जरां मरणं च for जरामरणे.

9. RAl. ॰युक्तायां for ॰युक्ता या.

10. वामावास्या *See* CN.

# पञ्चमः खण्डः

## 1. अथैकमनुष्याणामावर्त्तनम् । स्त्रिया वा पुंसो वा ॥

सा - कुटुम्बादीनां वशीकरणमुपरिष्टाद् वक्ष्यते । इदानीमेकमनुष्य-वशीकरणप्रयोगमाह । तत्रादौ प्रतिजानीते—अथैकमनुष्याणामिति । अथेत्यर्थान्तरद्योतनार्थः । एकमनुष्याणाम् एकस्य मनुष्यजातीयस्य आवर्त्तनं वशीकरणम् । तत्प्रयोग उच्यत इति शेषः । तदेव विशिनष्टि स्त्रिया वा पुंसो वा इति । यस्य नारी वा पुमान् वा वशीकर्तव्यः स्यात्, तस्य स्त्रियाः पुंसो वा आवर्त्तनं वशीकरणम् । तत्प्रयोगो वक्ष्यते इति ॥

भ - अथ सर्वावर्त्तनपर्यन्तानि वशीकरणानि प्रस्तूयन्ते । ततस्तावत् अथैकमनुष्याणामिति । एकमनुष्याणामेकैकस्य मनुष्ययजातीयस्यावर्त्तन-मधिक्रियते—स्त्रिया वा पुंसो वेति । पूर्वोक्तस्य विवरणम् आवर्तनम् अभिमुखप्रवर्त्तनं समीपनयनमित्यर्थः ॥ इति ॥

## 2. श्रवणेन व्रतमुपेत्य ॥ पूर्वैः प्रोष्ठपदैः ॥

सा - अथ तस्य व्रतारम्भकालमाह—श्रवणेन व्रतमिति । श्रवणेन श्रवणनक्षत्रेण युक्ते चन्द्रमसि व्रतम् "अथातः काम्यानामनादेशे त्रिरात्र-मुपवासः" इत्युक्तं व्रतम् उपेत्य उपक्रम्य, वक्ष्यमाणं प्रयोगं विहितकाले कुर्यात् ।

अथ तत्प्रयोगमाह—पूर्वैरिति । पूर्वैः प्रोष्ठपदैः युक्ते चन्द्रमसि वक्ष्यमाणं प्रयोगं कुर्यात् ॥

---

3. P. अमरादीनां मनुष्यादीनां च for कुटुम्बादीनां.

7. BBl. ०कर्तुमर्हः for ०कर्तव्यः ; BBl. om. तस्य.

8. BBl om. वशीकरणम् । तत्प्रयोगः.

14. B. तदारम्भकालम् for तस्य व्रता०...

19. P. प्रयुञ्जीत for प्रयोगं कुर्यात्.

भ - श्रवणेनेति ; "काम्यानामनादेशे त्रिरात्रमुपवासः" इत्युक्तम् । तत् श्रवणेन युक्ते चन्द्रमसि व्रतोपायनं कार्यम् । पूर्वैः प्रोष्ठपदैः युक्ते चन्द्रमसि प्रयुञ्जीत ॥ इति ॥

**4. पांसुभिः प्रतिकृतिं कृत्वा प्राक्शिरसं पूर्वाह्णे दक्षिणशिरसं मध्याह्ने प्रत्यक्शिरसमपराह्णेऽर्द्धरात्र उदक्शिरसं तस्या हृदयदेशमधिष्ठायायन्त इन्द्रसोम इति ब्राह्मणस्येदन्त एकमिति क्षत्रियस्यैष प्रकोश इति वैश्यस्य विभोष्ट इन्द्र राधस इति शूद्रस्योद्वयन्तमसस्परीति वा सर्वेषां सौवर्णीं प्रतिकृतिं कुर्याद् ब्राह्मणस्य राजतीं क्षत्रियस्यौदुम्बरीं वैश्यस्यायसीं शूद्रस्यौदुम्बरीं वा सर्वेषामयमसाविति प्राक्शिरसमग्नौ प्रतिष्ठाप्यौदुम्बरेण स्रुवेणाज्येनाभिजुहुयाच्छाव इतीनिधनेन गुणी हास्य भवति ॥**

सा - पांसुभिरिति । पांसुभिः साध्यस्य पुरुषस्य स्त्रिया वा प्रतिकृतिं कृत्वा अयमसाविति पुरुषस्य इयमसाविति स्त्रियाः, नाम उच्चार्य, तत्प्रतिकृतौ मनसा साध्यरूपं भावयित्वा प्राणं प्रतिष्ठाप्य तां पूर्वाह्णे प्राक्शिरसं मध्याह्ने दक्षिणशिरसम्, अपराह्णे प्रत्यक्शिरसम्, अर्द्धरात्रे उदक्शिरसं विविक्ते देशे संस्थाप्य तस्याः प्रतिकृतेः हृदयदेशमधिष्ठाय पदेनाक्रम्य, ब्राह्मणस्य ब्राह्मण्या वा प्रतिकृतिश्चेत् तां स्पृष्ट्वा अयं त इन्द्र सोम (ग्राम. 4. 5. 159. 1—3) इति साम जपेत् । एवमुत्तरत्रापि योज्यम् । क्षत्रियस्य क्षत्रियजातीयस्य चेत् इदं त एकम् (ग्राम 2. 7. 65. 1) इति जपेत् । वैश्यस्य वैश्यजातीयस्य चेत् प्रतिकृतिः एष प्रकोश (ग्राम. 16. 9. 556. 1) इति जपेत् । शूद्रस्य चेत् विभोष्ट इन्द्र राधस (ग्राम. 9. 2. 366. 1) इति । वा अथवा

---

9. TSB कृत्वा for कुर्यात्; S. क्षत्रस्य for क्षत्रियस्य.

20. BBl. om. क्षत्रियस्य.

21. BBl. om. वैश्यस्य; Bl. om. प्रतिकृतिः.

dielectric mir-
5-9 (July 1987).
an be used in a
of laser mirrors
harge lasers.
7).
es in discharge
lane, is investi-
is substantially
ad to unaccept-
laser research.
desanstalt, Inst.
luk.
7). (Multilayer
A, USA, 19-20
of PTB at the
paid to optimize
ures suitable for
scribed and its
nt characteriza-
r mirrors for use
, N.M.Ceglio,
v., CA, USA),
7). (Multilayer
A, USA, 19-20
ray wavelengths
ys. Specifically,
s in X-ray laser
acterization and
er and a highly
ray laser cavity
beamsplitters.
Nat. Lab., Cal-
, C.-H.Chang.
7). (Multilayer
A, USA, 19-20
ths has spurred
multilayer tech-
to design, fabri-
ds the goal of
tures have been
lied microfabri-
ree-dimensional
conference (see
on of the multi-
ion. They have
high-resolution
vides structural
the theoretical
lculated reflec-
ultilayer optics

[illegible] instrument based on microchannel plates..... See Entry 4856

## 43.30 LASER BEAM INTERACTIONS AND PROPERTIES

**2335 Highly damage-resistant Mo mirror for high-power TEA $CO_2$ laser systems.** Y.Ichikawa, K.Yoshida, Y.Tsunawaki, M.Yamanaka, T.Yamanaka, C.Yamanaka, H.Okamoto, N.Matsusue, K.Kitajima (Inst. of Laser Eng., Osaka Univ., Japan).
*Appl. Opt. (USA)*, vol.26, no.17, p.3671-5 (1 Sept. 1987).
A high-purity molybdenum (Mo) mirror was developed by an electron-beam melting method (e.b.m. Mo mirror). For the high-power TEA $CO_2$ laser, the e.b.m. Mo mirror has two to four times higher surface damage threshold than that of an Au-coated glass mirror and three times longer lifetime than that of a powder metallurgy Mo mirror (p.m. Mo mirror) when laser energy density lower than 60 J/cm$^2$ was irradiated with a 0.5-pps repetition rate. It was found that the difference between the e.b.m. Mo mirror and the p.m. Mo mirror at the laser-damage threshold was due to the fine surface without voids and the small amount of impurities. (11 refs.)

**2336 Measurement of the coherence of a single-mode phase-locked diode laser array.** N.W.Carlson, V.J.Masin, M.Lurie, B.Goldstein, G.A.Evans (David Sarnoff Res. Center, Princeton, NJ, USA).
*Appl. Phys. Lett. (USA)*, vol.51, no.9, p.643-5 (31 Aug. 1987).
The coherence of the light output of a single-mode phase-locked array has been experimentally measured. An analysis of the effects of partial coherence on the far-field pattern of a single-mode phased array is also presented. (7 refs.)

**2337 Multistable mode locking of InGaAsP semiconductor lasers.** M.Kuznetsov (Res. Lab. of Electron., MIT, Cambridge, MA, USA), D.Z.Tsang, J.N.Walpole, Z.L.Liau, E.P.Ippen.
*Appl. Phys. Lett. (USA)*, vol.51, no.12, p.895-7 (21 Sept. 1987).
The authors have investigated the pulsation behaviour of InGaAsP semiconductor lasers with a proton-bombarded segment. These lasers emit picosecond (30-70 ps) pulses at gigahertz (0.6-3.0 GHz) rates. An antireflection-coated diode in an external cavity is passively mode locked and multistable; as many as four co-existing states are observed. Interlocking hysteresis loops are observed in the pulsation frequency, pulse width, and output power as functions of the bias current. A delayed feedback model explains qualitative features of the multistable mode locking. The authors' knowledge this is the first report of multistability of laser pulsation. (13 refs.)

**2338 Active mode locking of InGaAsP Brewster angled semiconductor lasers.** J.T.K.Chang, J.I.Vukusic (Blackett Lab., Imperial Coll., London, UK).
*IEEE J. Quantum Electron. (USA)*, vol.QE-23, no.8, p.1329-31 (Aug. 1987).
Pulse durations of 10 ps have been obtained with 1.3-$\mu$m buried-heterostructure lasers fabricated using a multiple infrastructure. Mode locking has been achieved by polishing one facet to create a Brewster's angle in an external cavity using a grating as an external feedback mirror. (9 refs.)

**2339 Optical measurements on the UK free electron laser.** D.A.Jaroszynski, D.M.Tratt, C.R.Pidgeon, S.D.Smith, W.J.Firth, M.F.Kimmitt, C.W.Cheng (Dept. of Phys., Heriot-Watt Univ., Edinburgh, UK), M.W.Poole, G.Saxon, R.P.Walker, M.G.Kelliher, W.A.Gillespie.
*IEEE J. Quantum Electron. (USA)*, vol.QE-23, no.9, p.1514-21 (Sept. 1987).
The authors describe the data acquisition and optical diagnostic systems of the UK free-electron laser. Measurements of optical gain are reported and the first attempt at oscillation with laser injection is described. (11 refs.)

**2340 Time-invariant spatial points in the far field of a $CO_2$ laser transmissometer.** S.A.Brunker (Defence Sci. of Technol. Organ., Dept. of Defence, Adelaide, SA, Australia).
*Infrared Phys. (UK)*, vol.27, no.5, p.281-5 (Sept. 1987).
Commercially-obtained infra-red lasers can be used in many different system-configurations. Examples are velocimeters, transmissometers and densitometers. If the laser oscillates in one of several transverse electro-magnetic modes, and if the entire beam-cross-section cannot be sampled in both the near and far field, the value of the absorption factor of plane receiving elements in a broad spectrum band in fixed wave-length radiation contributes to a reduction in the fundamental error of the measuring transducer being used. An installation permitting significant reduction in the error in measuring the absorption factor of plane receiving elements is examined. It is shown that the method examined reduces significantly the total error in measuring the absorption factor as compared with the method in which one sphere is used but it is, meanwhile, less sensitive because of the high attenuation which the radiation undergoes during passage through the sphere, and consequently it does not permit measurement of high values of the absorption factor (small values of the reflected flux) that is accessible to the method with one sphere. (2 refs.)

**2344 Measuring installation to determine the absorption coefficient for pulse radiation.** O.I.Yakovleva, A.A.Liberman.
*Meas. Tech. (USA)*, vol.29, no.11, p.1044-5 (Nov. 1986). Translation of: *Izmer. Tekh. (USSR)*, vol.29, no.11, p.32-3 (Nov. 1986). [received: 14 Sep 1987]
The absorption coefficient of the receiving element must be determined with an error not exceeding fractions of a percent in certification and investigation of highly accurate measurement facilities for pulse laser radiation energy. An installation developed to solve this problem is described. (2 refs.)

**2345 Working standard of wavelength unit for pulsed laser.** A.E.Balakhnin, B.L.Bukovskii, V.I.Bobrik, M.A.Ivashechkina, T.P.Mikhailova, N.B.Sultanov, Yu.F.Tomashevskii.
*Meas. Tech. (USA)*, vol.30, no.1, p.25-8 (Jan. 1987). Translation of: *Izmer. Tekh. (USSR)*, vol.30, no.1, p.17-18 (Jan. 1987). [received: 23 Sep 1987]
Because the specifics of pulsed laser operation and of the spectral equipment designed on their basis do not allow one to test their adjustment by available measurement means, it was necessary to include a metrological circuitry for means of measurement of pulsed laser wavelength into the design of the adjustment test diagram. For this purpose, a working standard (WS) and standard and working means of measurement (SMM and WMM) of the pulsed laser wavelengths were designed and built at the Siberian State Scientific-Research Institute of Metrology (SNIIM). The working standard is designed to transfer the wavelength unit to the standard lasers and the SMM. The latter (IDV-3) transfer this unit to the WMM used in the state economy. The WS consists of a Fizeau interferometer with a vacuum chamber and thermostat, collimator, light system, receiver, wavelength meter IDV-3, highly stabilized iodine laser microcomputer with display and the laser being studied. (5 refs.)

**2346 Link between diffraction losses and light beam cross section in laser with telescopic resonator.** A.K.Dmitriev, Yu.V.Nekrasov.
*Meas. Tech. (USA)*, vol.30, no.1, p.31-4 (Jan. 1987). Translation of: *Izmer. Tekh. (USSR)*, vol.30, no.1, p.20-2 (Jan. 1987). [received: 23 Sep 1987]
One of the factors limiting the resolving power of laser spectrometers is the finite time of the interaction between the light field and the absorbing particles. The light beam cross section change and its link with the diffraction losses during the telescopic converter defocusing is discussed. In addition, the measurements of the resonator astigmatism compensation by the Brewster window are described. The studies carried out demonstrate that in the resonator stability region, the light beam cross section is well described by the expression using the transmission matrix elements, the simplified model for the diffraction qualitatively correlates with the test data, and the mirror astigmatism due to the inclined light beam incidence is compensated for by Brewster's window. (6 refs.)

**2347 Evolution of the coherence and intensity fluctuations of pulsed laser radiation with stationary phase modulation during thermal blooming.** V.V.Vorob'ev, V.A.Myakinin, V.N.Stepashkin, N.S.Tikhonova (Inst. of Atmos. Phys., Acad. of Sci., USSR).
*Radiophys. Quantum Electron. (USA)*, vol.30, no.1, p.45-52 (Jan. 1987). Translation of: *Izv. Vyssh. Uchebn. Zaved. Radiofiz. (USSR)*, vol.30, no.1, p.56-64 (Jan. 1987). [received: 8 Oct 1987]
An experimental study is done on the evolution of the coherent radius and the intensity fluctuation spectra in time after the transit of a laser pulse through a cell containing an absorbing liquid. The phase front of the radiation up to the nonlinear medium is distorted by a phase plate. It is observed that the fluctuations in the pulse first decrease and then increase as a function of increasing energy. A theoretical interpretation of the observed effects is given. (6 refs.)

nt methods are
rs. (7 refs.)
...... See Entry 7
$CO_2$ laser ......
See Entry 2166
isly pumped dye
See Entry 2184
See Entry 2187
See Entry 2194
ing color-center
See Entry 2206
ring laser cavity
See Entry 2221
tical reflector
See Entry 2228
frequency of an
See Entry 2232
external-cavity
See Entry 2233
he coupling of a
See Entry 2247
or laser diode
See Entry 2276
for use as soft
See Entry 2331
......................
See Entry 2332
laser with tele-
See Entry 2346

on

Res. Council of

described. The
adius at its apex



provides insight into the physics of these devices. In addition, a successful modeling capability allows them to iterate the fabrication cycle, modifying the design of the multilayer components to optimize their performance. (6 refs.)

**2333 Damage to multilayer mirrors in a hostile environment.** R.M.More, K.H.Warren, Z.Zinamon (Lawrence Livermore Nat. Lab., CA, USA).
*Proc. SPIE - Int. Soc. Opt. Eng. (USA)*, vol.688, p.134-8 (1987). (Multilayer Structures and Laboratory X-Ray Laser Research, San Diego, CA, USA, 19-20 Aug. 1986).
Development of laboratory X-ray lasers will require cavity components (mirrors, etc.) able to survive intense pulses of soft X-rays. The authors examine physical processes which are likely to limit the performance of layered synthetic microstructures and establish a theoretical damage limit ~0.1 Joule/cm$^2$ for Mo-Si composites. They also examine the suitability of general computational tools (XSN, QEOS, TKN, LASNEX) for this unusual low-temperature application. (16 refs.)

**2334 Measurement of optical losses and damage resistance of ZnS-$Na_3AlF_6$ and $TiO_2$-$SiO_2$ laser mirrors depending on coating design.** E.Welsch, H.G.Walther (Sektion Phys., Friedrich-Schiller-Univ., Jena, East Germany), D.Schafer, R.Wolf.
*Thin Solid Films (Switzerland)*, vol.152, no.3, p.433-42 (28 Sept. 1987).
Quarterwave ZnS-$Na_3AlF_6$ and $TiO_2$-$SiO_2$ multilayer stacks were prepared to investigate correlations between optical absorption, scattering and laser damage resistance at λ-488 nm, 515 nm and 530 nm respectively. The coating design was varied to assist the investigation. The ratio of interface to volume contributions to the optical losses was shown to depend on the coating material and deposition process used. The highest damage resistance was found in multilayer systems which consist of an alternating set-up of a λ/4 high refracting and a 3λ/4 low refracting component. Thus, the correlation between absorption and damage may not be established in each case, as the damage becomes design dependent. To explain this result, it is necessary to take into account the heat flow within the stacks investigated during laser irradiation as well as an additionally acting laser-induced thermal stress giving rise to a different damage resistance in the multilayer stacks. (11 refs.)

**Permanent magnet helical wiggler for free-electron laser and cyclotron maser applications** ........................ See Entry 1878

**Narrow-band resonant optical reflectors and resonant optical transformers for laser stabilization and wavelength division multiplexing** ............ See Entry 2032

**Flashlamp pumping systems for dye lasers (review)** ............ See Entry 2188

**GaInAsP/InP CBH surface-emitting laser with a dielectric multilayer reflector**

that temporal stationary points must be chosen in the plane of the detector, if a time-invariant signal is to be achieved. Methods are discussed which reveal such points in the near and far diffracted laser field. (6 refs.)

**2341 Apparatus for calibration testing of means of average laser emission power measurements.** S.A.Kaufman, A.P.Knyupfer, A.A.Liberman.
*Meas. Tech. (USA)*, vol.29, no.11, p.1029-31 (Nov. 1986). Translation of: *Izmer. Tekh. (USSR)*, vol.29, no.11, p.25-6 (Nov. 1986). [received: 14 Sep 1987]
The apparatus for calibration testing of average power means of measurements (ACTAP) is designed for transferring the dimension of the unit of the average laser emission power from the standard means of measurement (SMM) to the operational means of measurement (OMM) in accordance with the State Standard GOST 8.275-78. The ACTAP operates on the emission wavelength of 10.6 μm. The transfer of the OMM average power unit dimension is carried out at the power level of 80-100 W. The basic relative error of the ACTAP does not exceed $3\times10^{-2}$. The main metrological characteristic of the ACTAP is the error with which the average laser emission power at the OMM input can be measured. This error consists of the error of the SMM used on the ACTAP, the diffraction divider error, and the error caused by the emission instability. The mentioned components of the ACTAP error are discussed. (3 refs.)

**2342 Apparatus for calibration testing of means of relative energy density distribution (REDD) measurements in emission flux cross section of pulsed lasers.** V.I.Arbekov, O.G.Bykova, A.M.Raitsin, A.P.Romashkov, M.V.Ulanovskii.
*Meas. Tech. (USA)*, vol.29, no.11, p.1032-5 (Nov. 1986). Translation of: *Izmer. Tekh. (USSR)*, vol.29, no.11, p.27-8 (Nov. 1986). [received: 14 Sep 1987]
The analysis of matrix means of measurements (MM) accuracy characteristics determination principles of pulsed laser emission spatial-energy distributions makes it possible to conclude that the MM certification consists of two stages. The first stage is a preliminary one, when the assessment of the measurement channel conversion coefficient is made and the MM error during the REDD determination in a given point of the field is found. The second stage includes the MM unit certification for distributions of different classes and allows one to take into account the methodical error component, which depends on the REDD shape. The detailed description of the first preliminary certification stage of the MM for the laser emission spatial-energy characteristics determination using the developed apparatus for the calibration testing of MM REDD is given. (3 refs.)

**2343 Measuring apparatus to determine the absorption factor of plane specimens.** A.A.Liberman, E.M.Yankevich.
*Meas. Tech. (USA)*, vol.29, no.11, p.1041-3 (Nov. 1986). Translation of: *Izmer. Tekh. (USSR)*, vol.29, no.11, p.31-3 (Nov. 1986). [received: 14 Sep 1987]

**सर्वेषां** प्रतिकृतौ **उद्वयम्** (आ. गा. परिशिष्टम्. 5-6) **इति** जपेत् । अथवा जातिभेदेन **ब्राह्मणस्य** अन्यां **सौवर्णीं प्रतिकृतिं कुर्यात् । क्षत्रियस्य राजतीं, वैश्यस्यौदुम्बरीं** ताम्रमयीं, **शूद्रस्यायसीं** कृष्णायसनिर्मिताम् । **वा** अथवा **सर्वेषाम् औदुम्बरीं** ताम्रमयीम् । स्त्रियाः पुरुषस्य वा साध्यस्यान्यां प्रतिकृतिं कृत्वा, अयमसाविति पुरुषस्य, इयमसाविति स्त्रियाः, प्राणप्रतिष्ठां मनसा कृत्वा, तां प्रतिकृतिम् **अग्नौ प्राक्शिरसं प्रतिष्ठाप्य औदुम्बरेण** ताम्रमयेण **स्रुवेण अच्छा न** (ग्राम. 10.3.375.1) **इति** मन्त्रेण ई-निधनयुक्तेन, **आज्येन अभिजुहुयात्** । एवं कृते **अस्य** साधकस्यासाध्यः पूर्वमगुणोऽपि **गुणीभवति** । गुणशब्दाद्भूततद्भावे च्विः (पा. 5.4.50 वा.), तस्य सर्वापहारी लोपः, तस्य गतिसंज्ञायां "ते प्राग्धातोः" (पा. 1.4.80) इति प्राक्प्रयोगः प्राप्तोऽपि व्यवहिताश्च (पा. 1. 4. 82) इति **हास्येति** पदद्वयेन व्यवहितः प्रयोगः ॥

भ - अथ **पांसुभिः प्रतिकृतिं कृत्वा** इत्यारभ्य **गुणी** हास्य भवतीत्यन्तेन एकः प्रयोग उच्यते । स्पष्ट एवास्य समन्वयः । प्रयोगास्तु—**पांसुभिः प्रतिकृतिं** साध्यस्य **कृत्वा अयमसाविति** पुरुषस्येयमसाविति स्त्रिया नामोच्चार्य साध्यं पुरुषं स्त्रियं वा प्रतिकृतौ मनसा प्रतिष्ठाप्य तां प्रतिष्ठीकृतां **पूर्वाह्णे प्राक्शिरसं मध्याह्ने दक्षिणशिरसमपराह्णे प्रत्यक्शिरसमर्द्धरात्र उदक्शिरसं** विविक्ते देशे निधाय **तस्याः** प्रतिकृतेः हृदयदेशे पदेनाधिष्ठाय ब्राह्मणस्य वा **अयं त इन्द्र सोम** (ग्राम. 4.5.159.1) इति जपेत् । **क्षत्रियस्य** क्षत्रियाया वा **इदं त एकम्** (ग्राम. 2.7.65.1) इति; **वैश्यस्य** वैश्याया वा **एष प्रकोश** (ग्राम. 16.9.556.1) इति; **शूद्रस्य** तत्स्त्रिया वा **विभोष्ट रुद्र**

---

7. Bl. om. आज्येन.

8. B. साध्यं पूर्वेणापि गुणी भवति खलु । for (अ)साध्यः... Bl. after गुणीभवति adds इति हा वशीभवति खलु ।

10. BBl. इति प्रयोगः भवति । हास्येति पदद्वयेन व्यवहितप्रयोगः for इति प्राक्...प्रयोगः ॥

13. R. स्पष्ट एव दशमत्वयः, Al. स्य एव दसमत्वयः for स्पष्टः...

14. R. मासोच्चार्य, Al. प्रोच्चार्य for नामोच्चार्य.

17. RAl. विविक्तं for विविक्ते.

18. R. om. क्षत्रियस्य...इति जपेत् ।

19. Al. इद एष प्रकोशम् for इदं...त एकम्.

राधस (ग्राम. 9. 2. 3. 66. 1) इति जपेत् । **उद्वयं तमसस्परी-** (आ. गा. परिशिष्टम् 5-6)ति वा सर्वेषाम् । समाना अन्याश्च प्रतिकृतीः पूर्ववत् । **अयमसाविति** जीवं प्रतिकृतौ प्रतिष्ठाप्य तां प्रतिकृति-मग्नौ प्राक्शिरसं प्रतिष्ठाप्य तस्या उपरि अच्छा व इति ई-निधनेन (आ. गा. परिशिष्टम्. 5-6) औदुम्बरेण ताम्रमयेन स्रुवेण जुहुयात् सा प्रतिकृतिर्ब्राह्मणजातीयानां सौवर्णी कार्या । राजती क्षत्रियाणाम्; औदुम्बरी ताम्रमयी वैश्यानाम्; आयसी कृष्णायसनिर्मिता शूद्राणाम्; सर्वेषामौदुम्बरी [वा] । एवं कृते साध्योऽस्य गुणी वश्यो भवतीति ॥

**5. कृष्णव्रीहीणां नखनिर्भिन्नानां पिष्टमयीं प्रतिकृतिं कृत्वा पिष्टस्वेदं स्वेदयित्वा सर्षपतैलेनाभ्यज्य तस्याः क्षुरेणाङ्गान्यवदायाग्नौ जुहुयात् प्र मन्दिन इत्येतेन शेषं स्वयं प्राश्नीयादितरथाभावे म्रियेत ॥ १ ॥**

सा - अथास्य प्रयोगान्तरमाह—कृष्णव्रीहीणामिति । कृष्णव्रीहीणां कृष्णवर्णानां व्रीहीणां **नखनिर्भिन्नानाम्** अवघातेन विना नखैः संपादितानां तण्डुलानां स्वयं पिष्टेन, साध्यस्य पुरुषस्य वा स्त्रिया वा **प्रतिकृतिं कृत्वा** पूर्ववदयमसाविति जीवं प्रतिष्ठाप्य, तस्या उपरि **पिष्टस्वेदं** यावता पाकेन पिष्टं स्विद्यते, तथा **स्वेदयित्वा** तां **सर्षपतैलेन** अभ्यज्य अभितः अङ्क्त्वा **क्षुरेण** अयोमयेन **तस्याः** हृदयव्यतिरिक्तानि **अङ्गानि अवदाय** विभज्य खण्डयित्वा **प्र मन्दिने** (ग्राम. 10.3.380.1) **इत्येतेन** साम्ना **अग्नौ जुहुयात्** । **शेषं** हुतशेषं हृदयमङ्गं **स्वयं प्राश्नीयात्** । **इतरथाभावे** शेषभक्षणाकरणे **म्रियते** स्वयमेव मृतो भवेत् । अतः अवश्यं हृदयमङ्गं भक्षयेदित्यर्थः एवं कृते **गुणी हास्य भवति** इत्यनुषज्यते ॥ इत्येकपुरुषावर्तनप्रयोग उक्तः ॥ १ ॥

---

2. RAl. समानां आनाश्च for समानाः अन्याश्च.

17. Bl. om. अभितः अङ्क्त्वा.

18. B. तस्य for तस्याः; BBl. अङ्गानि for साम्ना.

22. BBl. एवं for एक; P. om. प्रयोगः.

भ - अथ वश्यप्रयोगान्तरम्—कृष्णव्रीहीणामिति । कृष्णानां व्रीहीणामवघातेन विना नखनिर्भिन्नानां, तण्डुलान् पेषयित्वा तत्पिष्टे[न] प्रतिकृतिं कृत्वा पूर्ववत् प्रतिष्ठाप्य पिष्टस्वेदं यथा पिष्टानि कुम्भ्यां स्वेदयन्ति तथा स्वेदयित्वा स्विन्नां प्रतिकृतिमुत्थाप्य सर्षपतैलेनाभ्यज्य तस्या हृदयव्यतिरिक्तान्यङ्गानि क्षुरेणावदाय प्र मन्दिन इत्येतेन (ग्राम. 10.3.380.1) हुत्वा शेषप्राशनाभावे साध्यस्य व्यापत्तिः स्यात् । तस्माच्छेषं प्राश्नीयादेवेति विवक्षुराह—इतरथाभावे म्रियेत प्राशनस्याकरणे म्रियेत साध्य इति उक्तान्येकपुरुषावर्तनानि ॥ १ ॥

**6. अथ यः कामयेतावर्तयेयमित्येकरात्रं क्षुरसंयुक्तस्तिष्ठेत् सुतासो मधुमत्तमा इति वर्ग एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जान एकरात्रेण कुटुम्बिनमावर्तयति ॥**

सा - अथानेकपुरुषावर्तनप्रयोगा उच्यन्ते अथ य इति । उक्तार्थोऽथशब्दः । यः पुमान् वक्ष्यमाणं कुटुम्बिनमित्यादिनोक्तं बहुपुरुषात्मकं साध्यम् आवर्तयेयं वशीकुर्यामिति कामयेत स एकरात्रं एकाहःसंपूर्तिपर्यन्तं क्षुरसंयुक्तः क्षुरं धारयन् तिष्ठेत् । तस्य जपाय सुतासो मधुमत्तमा (ग्राम. 16.8.547.1-8) इति वर्गः सामसमूहो भवेत् । एतेषां तद्वर्गस्थानां साम्नां मध्ये, इच्छया एकं साम, अनेकं वा द्वे त्रीणि इत्यादि वा, अथवा सर्वाणि वा प्रयुञ्जानः एकरात्रेण उक्तैकरात्रनियमेन कुटुम्बिनं बहुकुटुम्बसंयुक्तं पुरुषम् आवर्तयति वशीकरोति ॥

भ - अथ यः कामयेतावर्तयेयं च वशीकुर्यामिति कुटुम्बिनं प्रधानात् ॥

2. R. तं इष्टान्, Al. तं पिष्टान् for तण्डुलान्.
9. P. आवर्तेयं for आवर्तयेयं.
12. P. प्रयोग उच्यते for प्रयोगा उच्यन्ते ; BBl. उक्तः for उक्तार्थः.
13. B. आकृष्यमाणं for वक्ष्यमाणं.
14. आवर्तेयं for आवर्तयेयं.
15. BBl. after तिष्ठेत् add उत्थाय वसेत्.
17. Bl. om. द्वे and इत्यादि.

7. द्विरात्रेण राजोपजीविनं त्रिरात्रेण राजानं चतूरात्रेण ग्रामं पञ्चरात्रेण नगरꣳ षड्रात्रेण जनपदꣳ सप्तरात्रेणासुररक्षाꣳस्यष्टरात्रेण पितॄन्पिशाचान् नवरात्रेण यक्षान् दशरात्रेण गन्धर्वाप्सरसोऽर्द्धमासेन वैश्रवणं मासेनेन्द्रं चतुर्भिः प्रजापतिꣳ संवत्सरेण यत् किंच जगत्सर्वꣳ हास्य गुणीभवति ॥ २ ॥ ५ ॥

सा - अथोक्तप्रयोगस्यैवावृत्तिविशेषेणैव राजोपजीव्यादिवशीकरणमाह—द्विरात्रेणेति । निगदसिद्धोऽयम् ॥ २ ॥ ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये पञ्चमः खण्डः ॥ ५ ॥

भ - द्विरात्रेणेत्यारभ्य अनुवाकशेषेण बहुपुरुषावर्तनं निगदसिद्धमिति ॥ २ ॥ ५ ॥

॥ पञ्चमोऽनुवाकः ॥

---

5. My MB किंचित् for किंच.

7. BBl. जीवनादि for जीव्यादि.

9. B. om. वेदार्थप्रकाशे.

10. BBl. om. तृतीये ब्राह्मणे.

11. RAl. ग्रामादौ यम् for द्विरात्रेण.

## षष्ठः खण्डः

### 1. अथातः सौभाग्यानाम् ॥ १ ॥

सा - अथ सौभाग्यकामानां प्रयोगमाह—अथात इति । अथशब्दः अधिकारार्थः । वक्ष्यमाणप्रयोगेषु सौभाग्यकामानामधिकारः । भज्यते इति भगः । शोभनश्चासौ भगश्च सुभगः । तस्य भावः सौभाग्यम् । सुष्ठु योषिदादिभिर्भजनीयत्वं कामयमानानामित्यर्थः । तेषाम् अतः यतः प्रयोगानभिधाने वक्ष्यमाणफलानवाप्तिः अतस्तेषां प्रयोगा वक्ष्यन्ते इति शेषः ॥ १ ॥

भ - अथ सौभाग्यानां सहितानामधिकारः ॥ १ ॥

### 2. यदिन्द्रो अनयदुच्चा ते जातमन्धस इति नवमदशमे एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः सुभगो भवति ॥

सा - यदिन्द्रो अनयत् (ग्राम. 4.4.148.1-2) इत्येकं साम । उच्चा ते इति अस्य नवमदशमे द्वे (ग्राम. 12.1.467.9-10) । एवं त्रयाणामेतेषां मध्ये इच्छया एकम् अनेकं वा द्वे वेत्यर्थः । सर्वाणि वा त्रीणि वा सदा प्रयुञ्जानः सुभगो भवति इति ॥

भ - एतेषां त्रयाणां साम्नामन्यत-[मम्] अनेकं द्वे वा । यथैकमित्यर्थः । शिष्टं स्पष्टमिति ॥

### 3. द्वन्द्वाद्यायाः सप्तमाष्टमाभ्यामिन्द्राणीᳬ सदा तर्पयन् सुभगो भवति ॥

---

3. BBl. कामिनाम् for कामानाम्.

4. BBl. भगो भजतेऽभिषजनीयं, सुशोभनश्चासौ...for भज्यते . . .

13. B. अस्यां for अस्य; A. lost two leaves containing the writings from मासपर्यन्तं (p. 121. l. 9) to अस्य. It resumes नवमदशमे onward.

सा - अथ तत्रैव प्रयोगान्तरमाह—द्वन्द्वाद्याया इति । द्वन्द्वाद्यायाः द्वन्द्वस्य पर्वणः प्राणापानमुख्यस्य या आद्या दशती, तस्याः सप्तमाष्टमे "ह्वावीन्द्राम्," "उवा ओवा" (आ. गा. 2.1.58.7-8) इति । एताभ्याम् इन्द्राण्योरुल्बजरायुभ्याम् इन्द्राणीं सदा तर्पयन् त्र्यह(प्रत्यह ?)मुदकेन तर्पणं कुर्वन् सुभगो भवति इति ॥

भ - द्वन्द्वाद्यायाः सप्तमाष्टमाभ्यामिति । द्वन्द्वस्य पर्वणः प्राणापानप्रमुख्य-(ख ?) स्य या आद्या दशती तस्याः सप्तमाष्टमे "ह्वावीन्द्राम्" "उवा ओवा" (आ. गा. 2.1.58.7-8) इति एताभ्यामिन्द्राण्योरुल्बजरायुभ्यामिन्द्राणीं सदा तर्पयन् प्रत्यहमुदकेन तर्पणं कुर्वन्निति ॥

**4. अपामार्गं दन्तपवनं घृतमधुलिप्तं भद्रो नो अग्निराहुत इत्येतेनानिष्ठीवन् संवत्सरं भक्षयन् सुभगो भवति ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—अपामार्गमिति । दन्तपवनं दन्तशोधनसाधनम् अपामार्गम् अपामार्गकाष्ठं घृतमधुलिप्तं घृतेन मधुना च लिप्तं भद्रो न (ग्राम. 3.12.111.1) इत्येतेन साम्ना अनिष्ठीवन् निष्ठीवनमकुर्वन् संवत्सरं तत्पूर्तिपर्यन्तं भक्षयन् प्रतिदिनं दन्तान् शोधयन् सुभगो भवति इति ॥

भ - अथान्यदाह—अपामार्गं दन्तपवनं घृतमधुभ्यां लिप्तं भक्षयेत् । तेन दन्तान्न धावयेत् । अनिष्ठीवन्निगिरन् दन्तसत्वमिति ॥

**5. भगो न चित्र इत्येताभ्यामञ्जयन् सुभगो भवति ॥ २ ॥**

---

1. P. अत्रैव for तत्रैव.

2. A. दश, BBl. दशसंख्या for दशती; P. सप्तमाष्टममाभ्यां for सप्तमाष्टमे.

3. P. ओवा for उवा ; Bl. B. om. ओवा.

4. Bl. इन्द्रस्य for इन्द्राण्योः.

13. Bl. ०धावनं for पवनं.

14. ABBl. om. अपामार्गं; ABl. om. घृतमधुलिप्तं.

15. P. लेपितं for लिप्तं; P. अकृत्वा for अकुर्वन्.

16. A. दन्तं for दन्तान्.

सा - अथ तत्रैव प्रयोगान्तरमाह—भगो न इति । भगो न चित्र (ग्राम. 12.11.449.1-2) इत्येताभ्यां चक्षुः प्रतिदिनम् अञ्जयन् अञ्जनं कुर्वन् सुभगो भवति ॥ २ ॥

भ - भगो न इति । अञ्जयन्....अञ्जनं कुर्वन्निति ॥ २ ॥

**6. इममिन्द्रे—**(ग्राम. 9. 12. 344. 1-4)**ति वर्गं प्रयुञ्जानः सर्वजनस्य प्रियो भवति ॥ ३ ॥**

अथ प्रयोगान्तरमाह—इममिति । सुव्यक्तमेतत् ॥ ३ ॥

भ - इममिति । स्पष्टोऽर्थः इति ॥ ३ ॥

**7. परि प्रिया दिवः कविरित्येते** (ग्राम. 13.1.476.1-2) **यां कामयेत्ताꣳ श्रावयेत् । कामयते हैनम् ॥**

सा - अथ प्रयोगान्तरम्—परीति । उक्ते सामनी या मे मम वशे स्यादिति कामयेत् तां श्रावयेत् । तदैव सा वशगा भवति ॥

भ - परीति । एताभ्यां सामभ्यां काम्यमानां स्त्रियं श्रावयेत् ॥

**8. अथ यास्य न गुणीस्यात्तां ब्रूयादाचामेतीन्द्रो विश्वस्य राजतीत्येताभ्याम्** (ग्राम. 12. 1. 456. 1-2) **आचामेत् ॥**

सा - अथ प्रयोगान्तरमाह—अथ यास्येति । अथशब्दः प्रयोगान्तर-द्योतनार्थः । या नारी अस्य पुरुषस्य न गुणी अवशा स्यात् तां ब्रूयात् । किमिति? मामाचामेति आचामयेति । मामुदकं पाययेत्यर्थः । सा यद् आदिशति पानीयं तद् उक्ताभ्यां सामभ्याम् आचामेत् । एवं कृते सा गुणीभवति ।

---

4. अञ्जयन् *See* CN.
7. B. om. सुव्यक्तमेतत्; A has स्पष्टम instead.
11. Bl. यां मम वशीस्यादिति for या मे...; B. वश्या for वशे.
12. Bl. वशा for वशगा.
16. B. om. अथ....आह; A om. आह.
17. AB. सूचन for द्योतन; P. adds सः after तां.
18. P. यादा पाययति पानीयं तदा for यद्....तद्.
19. P. adds: इति after भवति.

भ - अथ यास्येति । अथेति पूर्वोक्त एव विषये प्रयोगान्तरमिति द्योतनार्थः । पूर्वोक्तेन श्रवणेन या न गुणीस्यात् तां ब्रूयादाचाम अचामय मां पानीयमिति । तया दीयमानं पानीयमेताभ्यामाचामेत् । सा गुणिनी भवतीति ॥

**9. पदपांसून्वास्या अग्नौ जुहुयाद्ये ते पन्था अधो दिव इति ॥**

सा - अथात्रैव प्रयोगान्तरमाह—पदपांसूनिति । अत्रोक्तप्रयोगापेक्षया वाशब्दो विकल्पार्थः । अस्याः स्त्रियाः पदपांसून् ये ते पन्था (ग्राम. 5.6.172.1) इति साम्ना अग्नौ जुहुयात् शतकृत्वो दशावरमिति ॥

भ - अत्र च प्रयोगान्तरमाह—पदपांसूनिति । शतकृत्वो दशावरं होम इति ॥

**10. तैलं वैनां याचित्वा पाणी परिमृद्नन्नग्नौ प्रतापयेदग्न आयाहि वीतय इति द्वितीयेन । नानागतायां विरमेत् ॥**

सा - अथ पूर्वोक्तविषये स्वयमागमनफलं प्रयोगमाह—तैलमिति । या न गुणीप्रकृता एनां, पूर्वप्रयोगद्वयापेक्षया विकल्पार्थो वाशब्दः, तिलभवं तैलं देहीति याचित्वा तेन तैलेन पाणी करतलद्वयं सोपरिभागं परिमृद्नन् परिमर्दनं कुर्वन्नग्नौ पाणी प्रतापयेत् अग्न आयाहि वीतय इति वर्गत्रये द्वितीयेन साम्ना (ग्राम. 1.1.1.2) । गुणीभवतीति शेषः । किं गुणीभूयानागतायामपि पाण्योः प्रतापनं कर्तव्यं नवेति संशये आह—नानागतायां विरमेदिति ।

---

7. AB om. अथ and आह.

10. RAl. शतावरं for दशावरं.

12. MTB. याचयित्वा for याचित्वा.

15. A om. अथ पूर्व०...आह; B. अथ तत्रैव प्रयोगान्तरमाह. for अथ पूर्वोक्तविषये...

16. P. reproduces Bharatasvamin's Comom. for this Paragraph with the only change of अग्न आयाहि इति अस्यामुत्पन्नेन द्वितीयेन in place of अनेन साम्ना; BBl. add. अथ तत्रैव प्रयोगन्तरमाह—'तैलं वैनां यचित्वा'—before या न ; Bl. प्राकृता for प्रकृता.

एकवारमनेकवारं वा पाण्योः परिमृद्य तापनेऽपि यद्यनागाता तदा नागच्छतीत्येवं बुद्ध्या न विरमेत् । यावदागमनं कुर्यादित्यर्थः । तत्र चतुर्थप्रकारस्य उक्तप्रयोगत्रयापेक्षया भावादवश्यं वशीभवत्येवेति भावः ॥

भ - अथ पूर्वोक्तविषये स्वयमागमनफलं प्रयोगमाह––तैलं वैनामिति । एनां स्त्रियं [प्रत्यक्षं] परोक्षं वा तैलं याचित्वा तया दत्तेन तैलेन पाणी स्वीयौ परिमृद्नन्· परिमृद्य तौ पाणी अग्नौ प्रतापयेत् अनेन साम्ना । अनागतायां न विरमेत् तस्या यावदागमनं प्रतापयेदिति ॥

11. गोजरायुकमहस्तस्पृष्टᳫं शोषयित्वा प्रियङ्गुकाᳫं सहाᳫं सहदेवामध्यण्डां भूमिपाशकाᳫं सचां काचपुष्पीमित्येता उत्थाप्य तदहश्चूर्णानि कारयेदा नो विश्वासु हव्यमित्येतेन त्रिः संपाताᳫंश्चूर्णेषु कृत्वा अग्न आयाहि वीतय इति रहस्येन अद्भिः संयूय तानि नाशुचिः पश्येन्नोपस्पृशेद्वा तदनुलेपनम् । तेनानुलिप्तो यां यामुपस्पृशते सा सैनं कामयते ॥

सा · अथ यां यां कामयते तस्यास्तस्या वशीकरणप्रयोगमाह––गोजरायुकमिति । जरायुर्गर्भपरिवेष्टनम् । तत्र विद्यमानं वसादिकं सह गर्भपरिवेष्टनेनाहस्तस्पृष्टं हस्तस्पर्शं विना शोषयित्वाग्नौ प्रतापनेनातपेन वा शुष्कं कृत्वा प्रियङ्गुकां फलवतीम् । प्रियङ्गुतण्डुलान् । सहा नाम द्रव्यविशेषः । सहदेवामध्यण्डामण्डे विद्यमानां सहाण्डामित्यर्थः । भूमिपाशकां

2. Bl. om. एवं.

8. MyTAB जरायुगम् for जरायुकम्.

11. AB My T. संबाधान् for संपातान्.

15. P. अथ प्रयोगान्तरमाह––गोजरायुकमिति । After this P follows Bharatasvamin with the only exception:(a) प्रियङ्गुकाप्रभृतीः...for प्रियङ्गुकासहाप्रभृतीः (vide P. 134. l. 12) (b) तद्दिवसमेव तासाम् for तासामुत्थापनदिवस एव (c) and after अनुलेपनं भवति । adds शेषं स्पष्टम् । (vide p. 134. l. 18)

18. BBl. प्रियङ्गुस्तत्तण्डुलान for प्रियङ्गुतण्डुलान्.

**सचां काचपुष्पीमित्येता** एतान्युत्थाप्य संपाद्य **तदहर्**यस्मिन् दिने प्रयोगस्तस्मिन् चूर्णानि पृथक् पृथक् **कारयेत्** । **आ नो विश्वासु हव्यमित्येतेन साम्ना** (ग्राम. 7. 4. 269. 1-3) वर्गत्रयस्थेनैकेन वा त्रिभिर्वा **प्रथमेन वा** विशेषानिर्देशात् **त्रिस्त्रिवारं संबाधान्** दक्षिणेन पाणिना पीडनानि तेषु **चूर्णेषु कृत्वा अग्न आयाहि वीतय** (आ. गा. 2. 7. 55. 1) **इति कप्रियह्रोइ इति रहस्येन** साम्ना **अद्भिः** सर्वाण्यपि **संयूय** संयुक्तानि कृत्वा मेलयित्वा **तानि नाशुचिः पश्येद्वोपस्पृशेद्वा** । स्पष्टम् । तदनुलेपनं कुर्यादिति शेषः । **तेनानुलिप्तो यां यां** स्वकामनाविषयामुप**स्पृशते** स्पृशति **सा सैनमे**वं स्पृशन्तं **कामयते** ॥

भ - गोजरायुकमित्यादिः सा सैनं कामयते इत्यन्त एकः प्रयोगः । **गोजरायुकम्** उल्बं जरायुश्चोभे गर्भवेष्टने; तयोरुल्बेन सह जायते गर्भः; जरायुः पश्चात् पतति ; तत् । गोजरायुकमिति स्वार्थे कप्रत्ययः । तद् गृहीत्वा **अहस्तस्पृष्टं** केनचित्पात्रेण गृहीतं **शोषयित्वा** तेन सार्द्धं[प्रियङ्गुका] सहाप्रभृतीरोषधीः[उत्थाप्य] तदहस्तासामुत्थापनदिवस एव **चूर्णानि कार**यित्वा कस्मिंश्चित्पात्रे निधाय **आ नो विश्वासु हव्यमित्येतेन** तिस्र आ[ज्या-]हुतीरग्नौ हुत्वा तासामाहुतीनां संपातान् चूर्णेषु **कृत्वा** ततो **अग्न आयाहि वीतय इति रहस्येन** तानि चूर्णान्यद्भिः **संयूय** संमिश्र्य स्थापयेत् पात्रे । **तानि नाशुचिः सन् पश्येत्** । नाशुचिरुपस्पृशेत् तानि । तदस्यानुलेपनं भवति ॥

## 12. गम्यां नास्नात उपस्पृशेत् ॥

**सा** - गम्यामिति । स्पष्टम् ॥

भ - अत्रैव कश्चिन्नियममाह—**गम्या**मिति । गम्यामुपगमनीयाम् **अस्नातो नोपस्पृशेत्** । स्नात एव तेनानुविलिप्य गात्राणि गमनार्थं स्पृशेदिति ॥

---

1. B. om. एताः
3. A. वर्गत्रयेण तेषु केनचिद्वा for वर्गत्रयस्थेनैकेन वा त्रिभिर्वा
4. Bl. पीडितानि for पीडनानि.
5. B. om. क from कप्रिय०.
6. A om. सर्वाण्यपि.
7. Bl. स्पृष्टम् for स्पष्टम्.

21. P. follows Bharatasvamin completely except that it add अथ before अत्र and reads अनुलिप्य for अनुविलिप्य.

13. उत्पले बुद्धे प्रियङ्गुका आवपेत् । यदा पर्णानि संहरेदथैनमुत्थाप्य चतुरङ्गुलमुभयतः परिच्छिद्य मध्यमुद्धरेत् । तदनुलेपनम् । तेनानुलिम्पेदवाꣳशं च नि त्वा नक्ष्य विश्पत इत्येतेनास्य वेशस्थाः प्रव्रजिताश्च वश्या भवन्ति ॥ ४ ॥

सा - अथ वेश्यानां प्रव्रजितानां च वशीकरणप्रयोगमाह—उत्पले इति । उत्पले कमले बुद्धे विकसिते तस्य कर्णिकायां प्रियङ्गुकाः प्रियङ्गुबीजानि आवपेत् । यदा तदुत्पलं पर्णानि संहरेत् संकोचयेत् अथ एनम् उत्पलम् उत्थाप्य पर्णविदलनं कृत्वा तस्य उभयतः मूले अग्रे च चतुरङ्गुलं परिच्छिद्य मध्यं कर्णिकाप्रदेशम् उद्धरेत् । तत् तस्य अनुलेपनं कर्तव्यम् । तेन द्रव्येण नि त्वा नक्ष्य विश्पते (ग्राम 1.3.26.1) इत्येतेन आत्मानम् अनुलिम्पेत् । अवांशं च निकृष्टमङ्गं लिङ्गं चानुलिम्पेत् । एवं कृते कामिताः वेशस्था वेश्या प्रव्रजिताः पतिकुलान्निर्गताः स्वैरचारिण्यश्च वश्या भवन्ति ॥ ४ ॥

भ - अथ वेश्यानां प्रव्रजितानां च वशीकरणं पयोगमाह— उत्पले इति । उत्पले बुद्धे विकसिते तस्य कर्णिकायां प्रियङ्गुकाः प्रियङ्गुबीजान्यावपेत् । यदा तदुत्पलं पर्णानि संहरेत् संकोचयेत् अथैनमुत्पलमुत्थाप्य तस्य उभयतो मूलेऽग्रे च चतुरङ्गुलं परिच्छिद्य मध्यम् [उद्धरेत्] । तदस्यानुलेपनम् । नि त्वा नक्ष्य विश्पते (ग्राम. 1.3.26.1) इत्येतेनानुलिम्पेत् गात्राणि । अवांशं लिङ्गं च तेनानुलिम्पेत् । स्पष्टमितरदिति ॥

---

3. Bl. मध्यमम for मध्यम.

6. AB. om. अथ.

7. P. बुद्धे विकसिते उत्पले कमले for उत्पले...विकसिते; AB. अस्य for तस्य.

8. AB. Bl. उत्पलस्य for उत्पलं.

9. A. पाणि० for पर्ण०; P. पाणिनैव हृत्वा for पर्णवि०...

10. Bl. मध्यमम. for मध्यं.

12. A. सवेशां, B. अवाङ्गवेशं Bl. स अवंशं for अवांशं.

13. A. कादिकताः, B कामिताकादिकर्ता for कामिताः.

**14.** कन्याप्रवहण एकरात्रोपोषितोऽमावास्यायां निशि चतुष्पथ एह्यूषु ब्रवाणि त इत्येतेनाभिषिञ्चेत् त्रिरभिषिक्ता प्रदीयते ॥

सा - अथ कन्यकां विवोढुं कामयितुः प्रयोगमाह—**कन्याप्रवहण** इति । **कन्याप्रवहणे** स्वकन्यायाः अन्येन विवाहे कर्तव्ये स्वयम् **एकरात्रोपोषितः** सन् **अमावास्यायां निशि चतुष्पथे एह्यूष्वि**(ग्राम. 1.1.7.1-2)त्येतेन तामभिषिञ्चेत् । एवं सा **त्रिरभिषिक्ता** त्रिवारमभिषिक्ता अमावास्यात्रये एकस्यां वामावास्यायां त्रिरभिषिक्ता सती स्वमताय वराय **प्रदीयत** इति ॥

भ - अथ कन्याया वरलाभार्थप्रयोगः—**कन्याप्रवहण** इति । **कन्याप्रवहणे** विवाहनिमित्ते । निगदसिद्धः शेष इति ॥

**15.** आ ते वत्सा इति पुंसः ॥ ५ ॥

सा - अथ कन्यालाभार्थप्रयोगमाह—**आ ते वत्सा इति पुंस** इति । कन्यां कामयितुः **पुंसः** पुरुषस्य एकरात्रोपवासाद्यभिषेकान्तं पूर्ववत् । एह्यूष्वित्येतस्य स्थाने **आ ते वत्सा** (ग्राम. 1.1.8.1-2) इति विशेषः ॥ (५)

---

1. AB. प्रवाहणे for प्रवहणे.

3. T, अभिषिक्तः for अभिषिक्ता.

4. A. कन्याया अन्यस्मै विवाहोद्युक्तायाः कन्यापितुः, B. कन्याया अन्यस्मै विवोढुं कामयितुं for कन्यकां...कामयितुः

5. AB. प्रावहणे for प्रवहणे ; ABBl. अन्यस्मै for अन्येन ; AB. त्रिरात्र० for एकरात्र०.

6. A. एह्यूष्वित्येतेन साम्ना नद्यां तामभिषिञ्चेत्तु, B. एह्यूषु ब्रवाणि त इत्येतेनाभिषिञ्चेत्, P. एह्यूष्वित्येतेन त्रिः अभिषिञ्चेत् for एह्यूषु...

7. A. एवं त्रिरभिषिक्ता सा कन्या कन्यापिता यस्मै वराय इच्छति तस्मै प्रदीयते इति; P. एवं सा अभिषिक्ता गुणान्विताय वराय प्रदीयते ॥ for एवं सा... ; Bl. om. एवं सा and त्रिवारमभिषिक्ता.

9. R. कन्यावर० for कन्याया वर०; Al. ०लाभार्थं for ०लाभार्थ०.

10. R. प्राणः, Al. शणः for शेषः.

13. P. ०उपवासादिरभिषेकान्तः, B. ०उपवासाद्यभिषेकपर्यन्तं for ०उपवासाद्यभिषेकान्तं.

भ - अथ पुंसः कन्यालाभार्थप्रयोगः—**आ ते वत्सा** इति पुंसः कन्याप्रवहण उक्त एव प्रयोगः । कन्यालाभे **एह्यू षु ब्रवाणि त** इत्येतस्य स्थाने **आ ते वत्सा** इति विशेष इति ॥

**16.** त्रिरात्रोपोषितः कृष्णचतुर्दश्याँ शवादङ्गारमाहृत्य चतुष्पथे बाधकमिध्ममुपसमाधाय मत्स्यं कुकरमित्येतौ जुहुयात् । अग्ने मृड महाँ असीति पूर्वेणाग्निर्वृत्राणीति द्वितीयाम् । ते आहुती कोशे कृत्वा हरितालेन गोहृदयशोणितेन चोत्तरेण संनयेद् यं द्विष्यात् प्रमँहिष्ठीयेनास्य शय्यामवकिरेत् अगारं च भस्मना । नैकग्रामे वसति ॥ ६ ॥

सा - अथ भ्रातृव्यस्य स्वस्थानादुच्चाटनार्थप्रयोगमाह—**त्रिरात्र** इति । साधकः आदौ **त्रिरात्रोपोषितः** सन्, तदन्ते **कृष्णचतुर्दश्यां** दह्यमानाच्छवादङ्गारमाहृत्य **चतुष्पथे बाधकं** रोगपीडितं चतुरङ्गुलायामम् **इध्मम्** तम् **उपसमाधाय** आधाय, **मत्स्यं कुकरं** पक्षिविशेषम् **इत्येतौ** द्वौ; **अग्ने मृडे**-(ग्राम. 1.3.23.1)**ति पूर्वेण** मत्स्यं **जुहुयात्**, **अग्निर्वृत्राणीति** (ग्राम. 1.1.4.3) **द्वितीयां** कुकराहुतिं **जुहुयात्** । ततः **ते आहुती** मत्स्यकुकरौ दग्धौ **कोशे** समुद्गे **कृत्वा** चूर्णीकृतौ **हरितालेन** हरितालचूर्णमिश्रितेन

---

1. RAl. add वः after वत्सा.

6. P. ककरम् for कुकरम्.

7. PAB RAl. वृत्रेति for वृत्राणीति.

11. A. ०नार्थः, P. ०नार्थे for ०नार्थ०

13. BlA. trans. तमुपसमाधाय of l. 14 after चतुष्पथे; P. पीडकं for पीडितं; P. चतुरङ्गुलदारुमयं, A चतुरङ्गुलमयं for चतुर०...

14. P. ककरं for कुकरं.

15. P. वृत्रेति for वृत्राणीति.

16. P. कुकर० for ककर०; PA क (कु A) करे for कुकरौ.

17. P. तदग्नौ for दग्धौ; P. समुद्गके for समुद्गे; P. पूर्णाहुतौ, A चर्णीकृतेन for चूर्णी० : ABBl. om. हरिताल.

गोहृदयशोणितेन च सह उत्तरेण अग्निर्वृत्राणीत्येतेन संनयेत् संगमयेत् । तथाकृतेन भस्मना यं द्विष्यात् अस्य तस्य शय्याम् अगारं तद्गृहं च प्रमंहिष्ठीयेन साम्ना (ग्राम. 3.12.107.1-4) अवकिरेत् । एवं च सत्यस्य द्वेष्टा नैकग्रामे वसति । किंतु स्थानभ्रष्टो भूत्वा देशान्तरं प्राप्नोतीत्यर्थः ॥ ६ ॥

भ - अथ भ्रातृव्यस्य ग्रामान्निर्गमनमिच्छतः प्रयोगमाह—त्रिरात्रोपेषित इत्यादिना नैकग्रामे वसतीत्यन्तेन । आदौ त्रिरात्रोपोषितस्त्रिरात्रस्यान्ते कृष्णचतुर्दश्यां दह्यमानात् [शवात्] अङ्गारमाहृत्य ततश्चतुष्पथे उपसमाधाय बाधकमाग्वधययम् (!) इध्ममाधाय मत्स्यं कृकरं पक्षिविशेषमित्येतौ द्वौ क्रमेण जुहुयात् । अग्ने मृडेति पूर्वेण मत्स्यम्, अग्निर्वृत्राणीति उत्तरेण द्वितीयां कृकराहुतिं जुहुयात् । ततस्ते आहुती हुते कोशे समुद्गे कृत्वा चूर्ण[ये]त् । ततो हरितालेन चूर्णीभूतेन गोहृदयशोणितेन चेत्युभाभ्यामुत्तरेण साम्ना अग्निर्वृत्रेति वा द्वितीयेन संनयेत् संगमयेत् तद्भस्म स्थापयेत् । यं द्विष्यादस्य शय्यां तेन भस्मनावकिरेत् । अगारं च तस्यावकिरत्वेतेन भस्मना । स विद्वेष्टा तेन सार्द्धम् एकग्रामे न वसति । ग्रामान्तरेऽपि न स्थितिं लभत इत्यर्थः ॥ इति ॥ ६ ॥

**17. अथातो यशस्यानां स्वमिन्द्रयशा असि (ग्राम. 6.2.248.1-5) पवते हर्यतो हरिर् (ग्राम. 17.10.576.1-3) इत्येतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानो यशस्वी भवति ॥**

---

2. ABBl. om. अस्य.
4. P. सन् for भूत्वा.
5. RAl. इच्छन् for इच्छतः.
7. RAl. ॰ह्यमानात् for दह्यमानात्.
8. आग्वधययम् ...*See* CN.
9. RAl. वृत्रेति पूर्वेण for वृत्राणीति उत्तरेण.
10. RAl. तेत्रा (ना Al) हुतिहुतो for ते आहुती हुते.
12. RAl. अग्ने मृडेति for अग्निर्वृत्रेति.
14. RAl. ऐनं for एतेन.
15. RAl. ग्रामान्तरस्थापि for ग्रामान्तरेऽपि.

सा - अथ यशस्कामस्य प्रयोगमाह—अथात इति । उक्तावथातः शब्दौ । प्रयोग उच्यत इति शेषः । शिष्टं स्पष्टम् ॥

भ - अथातो यशस्यानामित्येतेनानुवाकशेषेण यशोलाभार्थौ प्रयोगौ निगदसिद्धाविति ॥

**18. प्रियङ्गुका वा पुष्येणाभिजुहुयात् यशो मेति । तदनुलेपनम् । तेनानुलिम्पेत संवत्सरम् । यशस्वी भवति । यशस्वी भवति ॥ ७ ॥ ६ ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—प्रियङ्गुका इति । वाशब्दः प्रयोगान्तरद्योतनार्थः । प्रियङ्गुकाः प्रियङ्गुकाबीजानि पुष्येण नक्षत्रेण युक्ते चन्द्रमसि यशो मे-(आ. गा. 4 4.116.1)-ति अनेन साम्ना अभिजुहुयात् । तत् प्रियङ्गुकापिष्टमेव अनुलेपनं भवति । तेन संवत्सरं संवत्सरपर्यन्तं प्रतिदिनम् अनुलिम्पेत् । एवं कृते यशस्वी भवति । अभ्यासः खण्डसमाप्त्यर्थः ॥ ७ ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये षष्ठः खण्डः ॥ ६ ॥

[भ-] ॥ षष्ठोऽनुवाकः ॥

---

8. AB om. आह.
9. Bl. नक्षत्रयु० for नक्षत्रेण यु०
10. PBl. om. अनेन साम्ना.
11. BBl. add. इति after भवति.
12. A. द्विरुक्तिः समाप्त्यर्था for अभ्यासः...
14. A om. इति श्री...द्वितीयाध्याये.

# सप्तमः खण्डः

**1.** अथातो ब्रह्मवर्चस्यानाम् । रथन्तरं (आ. गा. 2. 6. 38. 1) वामदेव्यं नौधसꣳ (ग्राम. 6. 1. 236. 5) श्यैतं (ग्राम. 6. 1. 235. 3) महानाम्न्यो (आ. गा. परिशिष्ट 1-3) यज्ञायज्ञीयम् (ग्राम. 1. 4. 35. 4) इत्येतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानो ब्रह्मवर्चसी भवति ॥ १ ॥

सा - अथ ब्रह्मवर्चसकामस्य प्रयोगमाह--अथात इति । अथशब्दोऽधिकारे । अतःशब्दो हेतुवचनः । यतो ब्रह्मवर्चसार्थिनां प्रयोगानभिधाने न तदवाप्तिः अतो ब्रह्मवर्चस्यानां श्रुताध्ययनजन्यतेजस्कामिनां प्रयोगा उच्यन्त इति शेषः । शिष्टं निगदसिद्धम् ॥ १ ॥

भ - अथातो ब्रह्मवर्चस्यानामित्यारभ्य जगृह्मा त इति षड्वर्गं प्रयुञ्जानो ब्रह्मवर्चसी भवतीत्येतदन्तं निगदसिद्धम् ॥

**2.** कस्तमिन्द्रे-(ग्राम. 7. 5. 280. 1-2)-ति द्विकं प्रयुञ्जानो ब्रह्मवर्चसी भवति । श्रद्धा चास्य भवति ॥

सा - अथ ब्रह्मवर्चसस्य श्रद्धायाश्चोभयकामस्य प्रयोगमाह--कस्तमिन्द्रेतीति । निगदसिद्धमेतत् ॥

**3.** जगृह्मा त (ग्राम. 8. 9. 317. 1-5) इति षड्वर्गं प्रयुञ्जानो ब्रह्मवर्चसी भवति ॥ २ ॥

---

3. वामदेव्यं (ग्राम. 5.6.169.3) ? *See* CN.

7. ABl. प्रयोगः for प्रयोगमाह.

9. P. तदप्राप्तिः for न तदवाप्तिः ; ABBl. ॰जन्यं तेजस्तत्कामिनां for जन्य॰... ; P. प्रयोग उच्यते for प्रयोगा...

17. P. वर्गं for षड्वर्गं.

सा - अथ तत्रैव प्रयोगान्तरमाह—जगृह्मा त इतीति । यद्यप्यत्र छन्दोगाः पञ्चवर्गमधीयते, तथापि षड्वर्गमित्येतद् ब्राह्मणबलात् तच्छाखान्तरगतः षड्वर्गो वा ग्रहीतव्यः ॥ २ ॥

भ - जगृह्मा त इति षड्वर्गमिति । पञ्चवर्ग[ए]व य[द्यपि]समानः [तथापि] षष्ठं सामशाखान्त[रम् ] एष्टव्यमिति ॥

## 4. अष्टरात्रोपोषितो ब्राह्मीमुत्थाप्य प्रजापतेर्हृदयेना-(आ. गा. 5. 8. 243-स्तोभ)-भिगीय सहस्रकृत्वः प्राश्नीयाच्छ्रुतनिगादी भवति ॥

सा - अथ सकृच्छ्रुतस्याभिधानसामर्थ्यार्थं प्रयोगमाह—अष्टरात्रोपोषित इति । अष्टरात्रोपवासानन्तरं ब्राह्मीम् उत्थाप्य संपाद्य उक्तेन साम्ना सहस्रवारम् अभिगीय प्राश्नीयात् । सकृच्छ्रुतशब्दसमूहस्य निगदनसामर्थ्यं श्रुतनिगादित्वम् ॥

भ - अथ श्रुतनिगादित्वसाधनानि । सकृच्छ्रुतस्य शब्दरा[शे]स्तु निगदितुं सामर्थ्यं श्रुतनिगादित्वम् । सहस्रकृत्वोऽभिगीय प्राश्नीयादिति संबन्धः । स्पष्टमितरदिति ॥

## 5. पुष्पाणि वास्या उदकेन संवत्सरं यण्वेन प्राश्नीयाच्छ्रुतनिगादी भवति ॥

सा - अथ तत्रैव प्रयोगान्तरम्—पुष्पाणि वेति । अत्र वाशब्दः प्रयोगान्तरद्योतनार्थः । अस्या ब्राह्मयाः पुष्पाणि वा उदकेन पिष्ट्वा संवत्सरं

---

1. A om. आह.
2. Bl. ०धीयन्ते for ०धीयते; PBl. om. तत् from तच्छाखा०
5. RAl. एत्वेष्टव्यम् for एष्टव्यम्.
9. Bl. om. सकृत्; AB. सामर्थ्यप्रयोगम् for सामर्थ्यार्थं . . . .
11. B. श्रुतस्य for श्रुत०.
14. RAl. निगदादित्वम् for निगादित्वम्.
18. ABBl. om. अथ.
19. AB om. संवत्सरं.

संवत्सरपर्यन्तं यण्वेन (आ. गा. 3. 4. 72. 1) प्राश्नीयात् प्रतिदिनम्। तथा कृते श्रुतनिगादी भवति।

भ - अस्याः ब्राह्मयाः पुष्पाणि उदके[न] पिष्ट्वा यण्वेन प्राश्नीयात्। संवत्सरं प्रतिदिनमिति॥

**6. मासꣳ सोमभक्षः स्यात्सदसस्पतिमद्भुतम् (ग्राम. 5. 6. 171. 1) इत्येतेन श्रुतनिगादी भवति॥**

सा - अथ प्रयोगान्तरम्—मासं सोमभक्ष इति। स्पष्टोऽर्थः॥

भ - मासं सोमभक्ष इति। स्पष्टोऽर्थ इति॥

**7. सदा वैतत्प्रयुञ्जीत। श्रुतनिगादी भवति॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—सदा वैतदिति। पूर्वत्र मासनियमः। अत्र तूक्तफलस्यातिशयाय सदा वैतत् प्रयुञ्जीत॥

भ - सोमभक्षणे विना मासमेतत्सदा प्रत्यहं प्रयुञ्जीतेति॥

**8. भारद्वाजिकाया जिह्वामुत्थाप्य तदहश्चूर्णं कारयित्वा मधुसर्पिर्भ्याꣳ संयूय प्रागन्नप्राशनात् कुमारं प्राशयेदिन्द्रमिद्गाथिनो बृहदित्येतेन श्रुतनिगादी भवति॥**

सा - अथ पुत्रादीनां बाल्ये प्रयोक्तव्यं पूर्वोक्तं प्रयोगमाह—भारद्वाजिकाया इति। भारद्वाजः पक्षिविशेषः। स्त्रीजातीयायास्तस्याः जिह्वामुत्थाप्य आनीय तदहश्चूर्णं कारयित्वा मधुसर्पिर्भ्यां संयूय मिश्रयित्वा अन्नप्राशनात् प्राग् इन्द्रमिद्गाथिनो बृहद् (ग्राम. 5. 5. 198. 1) इत्येतेन साम्ना कुमारं प्राशयेत्। तथा सति सः श्रुतनिगादी भवति॥

---

2. P. सति for कृते; P. adds इति after भवति.
10. AB. om. अथ.
11. P. तत्फलस्य for तूक्तफलस्य; AB. अपि for वैतत्.
16. A. अत्र for अथ.
18. AB. मधुघृताभ्यां for मधु...; AB om. संयूय.
19. Bl. पूर्वं for प्राग्.

भ - अथ पुत्रादीनां बाल्य एव प्रयोक्तव्यं श्रुतनिगादित्वसाधनमाह—भारद्वाजिकाया इति । भारद्वाजिका नाम रक्तपक्षः पक्षिविशेषः । स्पष्टमन्यदिति ॥

**9. हरिद्रायास्तुलावरार्द्धं चूर्णयित्वैतेनैव कल्पेन संवत्सरं यण्वेन प्राश्नीयाच्छ्रुतनिगादी भवति ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—हरिद्राया इति । हरिद्रायाः तुलावरार्द्धं तदन्यूनं तदधिकं वा चूर्णयित्वा एतेन पूर्वोक्तेन मधुसर्पिर्भ्यामित्यनेन कल्पेन संवत्सरकालपर्यन्तम् इन्द्रमिद्गाथिन (आ. गा. 3.4.72.1) इत्येतस्यामेव यण्वेन राहसेन प्राश्नीयात् । कुमारं प्राशयेदित्यर्थः । पूर्वप्रयोगे ग्रामेगेयमिन्द्रमिद्गाथिन इत्यस्यामृचि [इति] अर्थात्सिद्धयति । उत्तरप्रयोगे यण्वेनेति वचनात् । अत्र संवत्सरकालवचनात् नात्र प्रागन्नप्राशननियमः । षष्ठ एव मासेऽन्नप्राशनविधानात् । यद्वा प्राश्नीयादिति वचनादधीतवेदस्य वाधिकारः ॥

भ - हरिद्राया इति । एतेनेति मधुसर्पिर्भ्यां संयूयेत्यर्थः ॥

**10. वचामेतेन कल्पेन वाचोव्रतेन पूर्वेण प्राश्नीयाच्छ्रुतनिगादी भवति ॥**

सा - अथ तत्रैव प्रयोगान्तरम्—वचामिति । हरिद्रायाः स्थाने वचा यण्वस्थाने पूर्वं वाचोव्रतम् हुवे वाचाम् (आ. गा. 4.1.167 स्तोभ) इत्येतत् । शिष्टं पूर्ववत् तुलावरार्द्धसंवत्सरादि ॥

भ - वचामेतेन कल्पेनेति प्रयोगः सिद्धप्रायः ॥

---

3. RAl. अन्यतरत् for अन्यत्.

4. My TA. तुलावराध्यं, M RAl. Bl. तुलावरार्द्धयं for तुला....

7. A. तुलावराध्यं, BBl. तुलावराध्यें for तुला...;Bl. adds तुलावराध्यां after तुलावराध्यें ; P. एतेनैव कल्पेन for एतेन पूर्वोक्तेन ; P. इत्युक्तत्वात् मध्वाज्याभ्यां संयुक्तं संवत्सरपर्यन्तं प्रतिदिनं यण्वेन प्राश्नीयात् । for पूर्वोक्तेन... प्राश्नीयात् .

9. P. om. इत्यर्थः; P. om. पूर्वप्रयोगे...वाधिकारः ॥

10. BBl. om. ऋचि.

18. A. समानं for पूर्ववत् ; A. तुलवराध्यं for तुला०.

**11.** मत्स्याक्षकशङ्खपुष्पीवचाकेरडीघृतानि बार्हद्गिरेणाभिजुहुयात् सहस्रकृत्वः शतावरम् । एतेनैव प्राश्नीयत् । श्रुतनिगादी भवति ॥ ३ ॥

सा - अथ तत्रैव प्रयोगान्तरम्--मत्स्याक्षकेति । उक्तद्रव्याणि मिश्रीकृत्वा इन्द्रो मदेति बार्हद्गिरेण (ग्राम. 11.7.411.5-7) सहस्रकृत्वः शतावरं हुत्वा, हुतशेषमेतेनैव बार्हद्गिरेण साम्ना संवत्सरपर्यन्तं प्रतिदिनं प्राश्नीयात् । श्रुतनिगादी भवति ॥ ३ ॥

भ - मत्स्याक्षकेति । मत्स्याक्षकादिचतुष्टयं चूर्णितं घृतं च संयूय पात्रे निधाय बार्हद्गिरेण सहस्रकृत्वः शतावरं चूर्णयोगेनाभिजुहुयात् । हुत्वा [च तत्] चूर्णं संवत्सरं बार्हद्गिरेण प्रत्यहं प्राश्नीयादिति ॥

**12.** वचायास्त्रिवृतं कारयेन्मणिमग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधाय वाचोव्रतेनोत्तरेणाभिजुहुयात् सहस्रकृत्वः शतावरम् । तं मणिं कण्ठेन शिरसा वा धारयन् कथासु श्रेयान् भवति ॥ ४ ॥

सा - अथ वादकथासु श्रेयस्त्वस्य प्राप्त्यर्थं प्रयोगमाह--वचाया इति । वचायाः त्रिवृतं त्रिपर्वाणं वचाद्रव्येण मणिं कारयेत् । अथ अग्निं

---

1. My AMTSABSS. केरटी for केरडी.

4. Bl. om. तत्रैव ; P. om. उक्तद्रव्याणि...एतेनैव.

6. ABBl. om. साम्ना संवत्सरपर्यन्तं प्रतिदिनं.

7. P. adds: शेषः स्पष्टोऽर्थः after भवति ॥

9. RAl. हुत्वा चूर्णयोगेनाभिजुहुयाच्चूर्णं निधाय पात्रे for चूर्णयोगेन...चूर्णं.

13. My कर्णेन for कण्ठेन.

15. P. वागादिकथासु अधिकवादित्वसाधनप्रयोगमाह for वादकथासु...

16. P. om. वचाद्रव्येण ; P. तं मणिं पात्रे निधाय अग्निं प्रतिष्ठाप्य, त्रिवृता आज्यतन्त्रेण पुरस्तात् तन्त्रं कृत्वा, वाचोव्रतेनोत्तरेण सहस्रकृत्वः शतावरं हुत्वा, संपातेन मणौ अभिजुहुयात् । for अथ अग्निं...मणौ जुहुयात् ।; Bl. om. अथ.

**प्रतिष्ठाप्य आवृता** पाकयज्ञप्रकारेण **हुत्वा** व्याहृतिहोमपर्यन्तं कृत्वा **मणिमग्नेः** पश्चाद्देशे **निधाय वाचोव्रतेन उत्तरेण हुवाइवाचाम्** (आ.गा.4.1.168 स्तोभ) इत्यनेन मन्त्रेण आज्यमग्नावभिजुहुयात् । **सहस्रकृत्वः** परमावधि **शतावरं** शतकृत्वोऽवरावधि । तदोक्तवारहोमेषु हुत्वा शिष्टं स्रुवलग्नं संपातेन मणौ जुहुयात् । प्रतिहोमवारं **तं मणिं कण्ठेन शिरसा वा धारयन्** वादकथासु प्रवर्तेत । तथा सति **श्रेयान् वादकथासु** श्रेष्ठो **भवति** । वादिनो विजयत इत्यर्थः ॥ ४ ॥

भ - अथ वादकथासु प्रवृत्तासु श्रेष्ठत्वे अधिकवादित्वे साधनमाह— **वचाया** इति । **वचाया** उल्लेखनतक्षणादिना **त्रिवृतं मणिं** कारयित्वा पात्रे **निधाय अग्निं प्रतिष्ठाप्य आवृता** पुरस्तात्तं वृत्वा **वाचोव्रतेनोत्तरेण सहस्रकृत्वः शतावरं** हुत्वा संपातेनाभिहुतं **मणिं कण्ठेन शिरसा वा** धारयेत् । स्वस्तिवादी भवति इति ॥ ४ ॥

## 13. वचां मधुकमित्येते आस्येऽवधायापां फेनेनेत्येतन्मनसानुद्रुत्यान्ते स्वाहाकारेण निगीर्य राजन्वानहमराजकस्त्वमसीत्युक्त्वा विवदेत् । पर्षदि राजनि चोत्तरवादी भवत्युत्तरवादी भवति ॥ ५ ॥ ६ ॥

स्रा - अथ पर्षदि सभायां विद्वत्सभायां राजसभायां राज्ञा संभाषणे चोत्तरं वक्तुं सामर्थ्यार्थप्रयोगमाह—वचामिति । **वचां मधुकमित्येते**

3. A adds: साम्ना after मन्त्रेण.

4. B. हुतशिष्टं Bl. हुतशिष्टस्रुव. for हुत्वा शिष्टं...; B. अग्नौ for मणौ.

5. P. om. प्रतिहोमवारं ; P. om. वादकथासु प्रवर्तेत । तथा सति.

6. P. om. वाद ; P. अधिकवादी for श्रेष्ठः; P. om. वादिनो...इत्यर्थः.

7. RAl. वाधिकथासु प्रवृत्तो शुभे for वादकथासु प्रवृत्तासु.

8. R. यत्नै, Al. पले for पात्रे.

9. R. पुरस्थातुं कृत्वा for पुरस्तात् तं वृत्वा.

14. MABl. परिषदि for पर्षदि.

16. पर्षदादि राजसभायां केनचित् विवादे सति अभयजयहेतु प्रयोगम, Bl. परीक्षादिसभायां विद्वत्सभायां राजसंभाषे चोत्तरं वक्तुं सामर्थ्यप्रयोगम् for पर्षदि...प्रयोगम्.

17. AB. मधुकं, स्वार्थे कप्रत्ययः वचामधुनी for मधुकमित्येते.

आस्येऽवधाय स्थापयित्वा अपां फेनेन (ग्राम. 6.10.211.1) इत्येतत् साम मनसानुद्रुत्य, अनुद्रवणं मनसा गानम्, अनुसंधाय, अन्ते सामान्ते जयस्पृधा स्वाहेति स्वाहाकारेण निगीर्य निगरणं कृत्वा राजन्वानहमराजकस्त्वमसीति वादिनं प्रत्युक्त्वा विवदेत् विवादं कुर्यात्। तथा सति स वक्ता पर्षदि विद्वत्सभायां राजनि च राजानं प्रत्यपि उत्तरवादी उत्तरं वक्तुं समर्थो भवति। विजयी लौकिके वैदिके वा विवादे भवतीति ॥

अभ्यासः खण्डसमाप्त्यर्थः ॥ ५ ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये सप्तमः खण्डः ॥ ७ ॥

भ - अथ केनचिद्विवादे परिषदि राजसंनिधौ वा प्रवृत्ते जयहेतुमाह वचां मधुकमित्यनुवाकशेषेण। निगदसिद्धम् ॥ इति ॥

॥ सप्तमोऽनुवाकः ॥

---

1. AB om. स्थापयित्वा; P. after फेनेन adds: नमुचेः शिरः.

2. Bl. P om. अनुद्रवणं मनसा गानं; PBl. उच्चार्य for अनुसंधाय P. मन्त्रान्ते for सामान्ते; Bl. मन्त्रान्ते for अन्ते P. om. जयस्पृधा स्वाहेति.

3. ABBl. om. निगरणं कृत्वा; P. आत्मानं राजन्वानहम् इत्युक्त्वा अराजकस्त्वमसीति प्रतिवादिनम् उक्त्वा for राजन्वान्...प्रत्युक्त्वा.

4. P. before विवादं adds तेन सह; AB. om. तथा सति स वक्ता; P. परिषदि राजनि चोत्तरवादी भवति for पर्षदि...समर्थो भवति।

6. P. om. विजयी...भवति.

7. ABBl. द्विरुक्तिरुक्ताधिकारसमाप्त्यर्था for अभ्यासः...

8. A om. इति...द्वितीयाध्याये; B om. इति...ब्राह्मणे.

# अष्टमः खण्डः

1. अथातः पुत्रियाणाम् ॥ १ ॥

सा - अथ पुत्रार्थिनां प्रयोगमाह—अथात इति । अथशब्दोऽधिकारान्तरार्थः । अतः यतः पुत्रार्थिनां प्रयोगापेक्षा, अतः **पुत्रियाणां** पुत्रार्थिनां प्रयोगाः उच्यन्ते इति शेषः ॥ १ ॥

भ - अथातः पुत्रियाणां सिद्धौ इति ॥

2. **नि त्वा नक्ष्य** (ग्राम. 1. 3. 26. 1) **नि त्वामग्ने** (ग्राम. 2. 5. 54. 1-2) **प्र यो रायेऽ**-(ग्राम. 2. 6. 58. 1) **-यमग्निः सुवीर्यस्य** (ग्राम. 2. 6. 60. 1) **जातः परेण** (ग्राम. 3. 9. 90. 1) **न हि वश्चरमञ्च न** (ग्राम. 6.1.241.1-2) **सोमः पवते जनिता मतीनाम्** (ग्राम. 15. 6. 527. 1-4) **इति सर्वाण्यपत्यं** (आ. गा. 3. 4. 73. 1) **नित्यवत्सा** (आ. गा. 2. 6. 48. 1) **रथन्तरं** (आ. गा. 2. 6. 49. 1) **व्याहृतिवर्गोऽ**-(आ. गा. 4.1.172 स्तोभ)-**रूरुचदिति द्वे** (आ. गा. 3. 3. 71. 1-2) **एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः सुरूपान् दीर्घायुषः पुत्राँल्लभते** ॥

---

2. AB. पुत्र्याणाम् for पुत्रियाणाम्.

3. ABBl. पुत्रकामस्य for पुत्रार्थिनां; A. अथानन्तरं यतः पुत्रार्थिनां प्रयोगानभिधाने पुत्रालाभः । अतः पुत्र्याणां पुत्रलाभहितानाम् अध्ययनानां for अथशब्दोऽ...पुत्रार्थिनां, Bl. follows A except for पुत्रीयाणां पुत्रलाभहीनानाम्.

सा - नित्वानक्ष्येत्यादीनि सोमः पवते जनितेत्यन्तानि सर्वाणि सप्त सामानि प्रयुञ्जानः अपत्यमित्यादीनाम् अरूरुचदिति द्वे इत्यन्तानामेतेषां मध्ये एकमनेकं वा सर्वाणि वा प्रयुञ्जानः सुरूपान् दीर्घायुषः पुत्रान् लभते इति ॥

भ - नित्वानक्ष्येति । अपत्य....अरूरुचदिति द्वे इत्येतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जीतापत्यकाम इति ॥

**3. रोहिण्यां वा रोहिण्या गोः सरूपवत्सायाः पयसि रक्तशालीनां स्थालीपाकं श्रपयित्वा परमेष्ठिनः प्राजापत्यस्य व्रतेनाभिजुहुयात् सहस्रकृत्वः शतावरम् । एतेनैवाभिगीयोद्धृत्य सभार्यः प्राश्नीयात् । सुरूपान् दीर्घायुषः पुत्राँल्लभते ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—रोहिण्यामिति । वाशब्दः प्रयोगान्तरद्योतनार्थः । रोहिण्यां नक्षत्रे रोहिण्याः रोहितवर्णाया गोः सरूपवत्सायाः रोहितवर्णवत्साया एव पयसि रक्तशालीनां तण्डुलैः स्थालीपाकं श्रपयित्वा परमेष्ठिनः प्राजापत्यस्य व्रतेन क आ नो मयि वर्च (आ. गा. 4.1.96.1) इति साम्ना अभिजुहुयात् । सहस्रकृत्वः शतावरं हुत्वा संपातेनाभिहुतं स्थालीपाकम् एतेनैव उक्तेनैव साम्ना संख्याक्रमेणैव अभिगीय तद्धविः उद्धृत्य सभार्यः प्राश्नीयात् । सुरूपान् दीर्घायुषः पुत्रान् लभते ॥

---

1. ABBl. नित्वानक्षीत्यारभ्यारूरुचदित्यन्तानां साम्नामेकमनेक वा.... for नित्वानक्ष्येत्यादीनि...एकमनेकं वा.

4. R. अम्पत्यसरसीरोहिरूरुचदिति Al. अपत्याहीमामीरोहिरूरुचदिति for अपत्य...अरूरुचदिति; *See* CN.

11. ABBl. om. अथ&आह; ABBl. om. वाशब्दः प्रयोगान्तरद्योतनार्थः.

12. AB. om. रोहिण्याः; P. रक्त for रोहित.

13. AB. om. सरूपवत्सायाः; P. रक्तवर्णवत्ससंयुक्तायाः for रोहित...

14. P. om. क आ नो मयि वर्च इति.

15. P. हुत्वा for अभिजुहुयात्; A. आज्येन स्थालीपाके संपातानवनयन् तेनैवाभिगीय प्राश्नीयात् । सरूपमित्यादि व्याख्यातं पूर्वम्; BBl. एतेनैव साम्नाभिगीयोद्धृत्य सभार्यः प्राश्नीयात् । सरूपानित्यादि व्याख्यातम् ॥ for हुत्वा...लभते ॥

भ - रोहिण्यामिति । रोहिणीनक्षत्रे रोहिण्याः रक्तवर्णायाः सरूपवत्सायाः पयसि रक्तशालीनां तण्डुलैः स्थालीपाकं श्रपयित्वा निधाय परमेष्ठिनः प्राजापत्यस्य व्रतेनाज्यं सहस्रकृत्वः शतावरं हुत्वा संपातं स्थालीपाकेऽभिजुहुयात् । एतेनैव साम्नाभिगीय उद्धृत्य पात्रान्तरे कृत्वा भार्यया सह प्राश्नीयात् । स्पष्टं शेषमिति ॥

**4. कृष्णाया गोः सरूपवत्सायाः पयसि कृष्णषष्टिकानाꣳ स्थालीपाकꣳ श्रपयित्वा कृष्णपञ्चम्यामुदिते सोमे त्वमिमा ओषधीर् (आ.गा.4.1.98.1) इत्येतेनाभिजुहुयात् सहस्रकृत्वः शतावरम् । एतेनैवाभिगीयोद्धृत्य सभार्यः प्राश्नीयात् । सुरूपान् दीर्घायुषः पुत्राँल्लभते ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—कृष्णाया इति । पूर्ववद् व्याख्येयम् । कृष्णषाष्टिकानां कृष्णवर्णानां षष्टिदिनसफलितानां व्रीहीणां तण्डुलैरित्यर्थः ॥

भ - कृष्णाया इति पूर्वेण व्याख्यातमेतत् ॥

**5. कौम्भ्यं घृतं पुरुषव्रतेनाभिजुहुयादनुगानशः । उत्तरेण सदा प्राश्नीयात् । सुरूपान् दीर्घायुषः पुत्राँल्लभते ॥ २ ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—कौम्भ्यं घृतमिति । कौम्भ्यं कुम्भे पूरितं घृतम् अग्निसमीपे निधाय पुरुषव्रतेन साम्ना (आ. गा. 5. 6. 132-136) सहस्रकृत्वः शतावरम् आज्येन अनुगानशः पञ्चानां साम्नामन्ते प्रत्येकं स्वाहाकारेण हुत्वा तदा कुम्भोपरि संपातेन अभिजुहुयात् । ततस्तेनैव

---

4. RAl. अभिपृ(प Al) इय गीत्वा for अभिगीय.

7. MTB. षाष्टिकानां for षष्टिकानां.

11. ABBl. om. अथ & आह.

12. AB. add ष (षा B)ष्टिकानां after कृष्णवर्णानां; P. trans. कृष्णवर्णानां after ०फलितानां.

19. P. om. अनुगानशः पञ्चानां साम्नामन्ते प्रत्येकं स्वाहाकारेण.

20. B. उद- for तदा.

साम्ना उक्तसंख्यया तदाज्यमनु गीत्वा तदनुगीतमाज्यं प्रतिदिनम् उत्तरेण पुरुषव्रतेन (आ. गा. 5.6.137.1) किंचित् किंचित् प्राश्नीयात् । एवं सति उक्तगुणान् पुत्रान् लभते २ ॥

भ - कौम्भ्यं घृतमिति । कौम्भ्यं कुम्भे निहितं घृतमाज्यं सहस्रकृत्वः शतावरमग्नौ हुत्वा संपातं कुम्भेऽभिजुहुयात् । होमे प्रतिहोमे होमसाधनं पुरुषमनुगायेत् । तत् कौम्भ्यं घृतं निधाय तस्मात् किंचित् किंचिद् आदाय प्रतिदिनमुत्तरेण पुरुषव्रतेन प्राश्नीयादिति । पुत्रकामस्य चत्वारः प्रयोगा वैकल्पिका इति ॥ २ ॥

**6. उडङ्ग्वानां योऽग्रे गच्छेत् तं गृहीत्वा तदहस्त्रिवृतं कारयेन्मणिमग्निं प्रतिष्ठाप्यावृता हुत्वा मणिं निधायोच्चा ते जातमन्धस (ग्राम. 12.1.467.3) इति तृतीयेनाभिजुहुयात् सहस्रकृत्वः शतावरम् । तं मणिं कण्ठेन शिरसा वा धारयञ्छतानुचरो भवति शतानुचरो भवति ॥ ३ ॥ ८ ॥**

सा - अथ बह्वनुचरकामस्य प्रयोगमाह—उडङ्ग्वानामिति । उडङ्ग्वाः धान्यविशेषाः । तेषां फलितानां मध्ये यः स्तम्बो अग्रे गच्छेत् तं गृहीत्वा तदहः तत्संग्रहणदिवसे एव तद्धान्यानि पिष्ट्वा त्रिवृतं त्रिपर्वाणं मणिं कारयेत् । अग्निं प्रतिष्ठाप्येत्यादि सिद्धप्रायम् इति ॥

अभ्यासोऽध्यायसमाप्त्यर्थः ॥ ३ ॥ ८ ॥

---

4. R om. second घृतं; RAl. इतरादाज्य for आज्यं.

17. A. तस्य ग्रहण०, BBl. स्तम्बग्रहण० for तत्संग्रहण; P. om. तद्धान्यानि; P. om. त्रिपर्वाणं.

18. B. om. सिद्धप्रायम्. . .; A प्रसिद्ध० Bl. प्रसिद्धम for सिद्धप्रायम्.

19. AB om. अभ्यासोऽध्यायसमाप्त्यर्थः; A concludes the chapter with only इति सामविधानब्राह्मणभाष्ये सायणाचार्यविरचिते माधवीये द्वितीयोऽध्यायः ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयाध्याये अष्टमः खण्डः ॥ ८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे द्वितीयोऽध्यायः ॥ २ ॥

॥ इति द्वितीयः प्रपाठकः ॥

भ - यः कामयेत शतमनुचरा मे स्युरिति तस्य सिद्धिसाधनमाह— **उडङ्ववान**।मित्यनुवाकशेषेण । उडङ्ववो धान्यविशेषः । तेषां मध्ये **यस्तुषकः अग्रे** प्राच्यां दिशि **गच्छेत्**, पाककाले प्रागग्रो भवति, अथवा योऽग्रे प्रथमं गच्छेत् प्राङ्मुखासन्नं... **तं गृहीत्वा** ग्रहणदिवस एव पिष्टेन तेन त्रिवृतं **मणिं** कारयेत् । शोषितोऽयं दृढो भवति । शिष्टः सिद्धप्रायोऽर्थ इति ॥ ८ ॥

॥ अष्टमोऽनुवाकः ॥

इति सामविधाने आचार्यभरतस्वामिकृतौ पदार्थमात्रविवृतौ द्वितीयोऽगात् प्रपाठकः ॥ २ ॥

---

2. B om. तृतीये.

6. B. अमात्येन for आचार्येण; B. सामविधानब्राह्मणभाष्ये for सामविधानाख्ये तृतीये ब्राह्मणे.

12. RAl. प्राङ्मुखाद्विद्वासन्नं. for प्राङ्मुखासन्नं *See* CN.

16. RAl. after the colophon add भवति.

तृतीयः प्रपाठकः

## प्रथमः खण्डः

**1. अथातो धन्यानाम् ॥**

सा - यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥

अथ धान्यलाभजन्यैश्वर्यादिसाधनान् प्रयोगान् विवक्षुरादौ प्रतिजानीते—**अथातो धान्यानामिति** । **अथ**शब्दोऽधिकारान्तरद्योतनार्थः । **अतः**शब्दो हेतुवचनः । यतः प्रयोगानभिधाने वक्ष्यमाणधान्याद्यसिद्धिः अतो **धान्यानां** धान्यफलसाधकानां प्रयोगा उच्यन्त इति शेषः ॥

भ - अथातो धन्यानामिति । परं धनसाधनानां विधानमधिक्रियत इति ॥

**2. शुक्लवाससा प्रयोगः स्नानमवलेखनमनिष्ठीवनꣳ सदा चाञ्जनꣳ सत्यवचनꣳ सुमनसां धारणं केशश्मश्रुलोमनखानां तु नान्यत्र व्रताद् । दारानेवोपेयात् काले । एवंव्रतो यदुदीरत आ हर्यतायेति वर्ग एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः श्रीमान्यशस्वी पुष्टिमान् धन्यो भवति ॥ १ ॥**

---

3. PMy Bl. धान्यानाम् for धन्यानाम्. The reading commented on by Sayana was धान्यानाम्, while Bharataswamin accepts धन्यानाम् which appears to be correct in view of the text that follows.

6. PA. साधन for साधनान्.

8. P. ०फलानवाप्तिः for धान्याद्यसिद्धिः

9. A. धन्यानां for धान्यामां; A. साधनानां for साधकानां

सा - अथ श्रीरादिसाधनं प्रयोगमाह--शुक्लवाससेति । शुक्लवाससा शुक्लवासोयुक्तेन वक्ष्यमाणः प्रयोगः कार्यः । प्रयोगात् पूर्वं शुद्ध्यर्थं स्नानं कर्तव्यम् । अवलेखनं भूखननादि कर्म । अवलेखनशब्दस्य प्रथमाक्षरस्य

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।"

इति वचनाल्लोपे वलेखनमिति रूपम् । ततश्च नञा समासे अवलेखनमिति भवति । भूम्यवलेखनं न कर्तव्यमित्यर्थः । अनिष्ठीवनं व्रतकाले निष्ठीवनस्याकरणम् । सदा चाञ्जनं सर्वदा अञ्जनधारणम् । सत्यवचनं सुमनसां पुष्पाणां धारणं च सर्वदा कर्तव्यम् । केशश्मश्रुलोमनखानां तु नान्यत्र व्रतात् । व्रतेषु दर्शपूर्णमासाद्यङ्गत्वेन विहितेषु केशादीनां न धारणम् । तत्र वपनं स्यादेव । काले दारानेव भार्यामेव उपेयात् । अनेन निषिद्धकालो भार्याव्यतिरिक्तप्रदेशश्चेत्युभयं तत्र निषिध्यते ॥

एवंव्रतः सन् यदुदीरत (ग्रान. 11.7.414.1) इत्येतत् साम आ हर्यताये-(ग्राम. 16.8.551.1-4)-ति वर्गश्च । एतेषां मध्ये एकम् अनेकं द्वे त्रीणि सर्वाणि वा प्रयुञ्जानः श्रीमान् बह्वैश्वर्ययुक्तः यशस्वी बहुकीर्तिः, पुष्टिमान्, बहुपोषणयुक्तः धन्यः धनवांश्च भवति ॥

ननु धान्यानां प्रयोग उच्यत इति प्रतिज्ञातम् । अत्र तु श्रीरादि फलमुच्यते अतो विरुद्धमिति चेत् । नैष दोषः । उक्तफलानामपि धान्यसमृद्धिलभ्यत्वात् ॥ १ ॥

---

1. BBl. श्रीसाधनस्य for श्रीरादि०; P. साधन० for साधनं.

2. P. शुभ्रवस्त्र० for शुक्लवासो०.

3. Bl. भ्रू...for भू...; P. ०खननं for ०खननादि ABBl. om. प्रथमाक्षरस्य.

5. AB. वचनादल्लोपे for वचनाल्लोपे; P. तच्च for ततश्च, Bl. om. ततश्च.

7. P. After सत्यवचनं adds: यथार्थभाषणम् ।

8. ABBl. कार्यम् for कर्तव्यम्.

9. BlAB. व्रते तु for व्रतेषु.

17. P. adds: श्रुति before फल.

भ - तत्र तावद् व्रतान्याह—शुक्लवाससेति । प्रयोगकाले शुक्लवासस्त्वं पूर्वकाले स्नानम् । भूमेश्च खननादिकम् [अवलेखनम्] । अवलेखनशब्दे प्रथमाक्षरलोपेन [व]लेखनमि[ति] ।

" वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।"

इत्याद्यक्षरलोपः । तस्याकरणमवलेखनमित्यर्थः । [अनिष्ठीवनं] निष्ठीवनस्याकरणम् । एतत् सर्वं प्रयोगकाल एव । अथ तेषु दिनेषु सार्वकालिकानि । सदा अक्ष्णोः अञ्जनं सत्यवचनं सुमनसां पुष्पाणां धारणं केशश्मश्रुलोमनखानां तु व्रतादन्यत्र [न]धारणम् । व्रतेषु दर्शपूर्णमासाद्यङ्गत्वेन विहितेषु न धारणम् । वपनं स्यात् । काले प्रतिषिद्धदिनानि वर्जयित्वैवोपेयादिति ।

एवंव्रत उक्तप्रकारव्रतयुक्तः श्रीः श्रयणीयत्वं तद्वान्, यशः प्रसिद्धिः, पुष्टिः पुत्रपश्वादिसमृद्धिः तद्वान्, धन्यो धनवांश्च भवति । निगदसिद्धमन्यदिति ॥ २ ॥

**3. गिर्वणः पाहि नः सुतमिति चैतत्सदा प्रयुञ्जीत । मयि श्रीरिति चास्य निधनं कुर्याच्छ्रीमान् भवति ॥**

सा - अथ श्रीसाधनं प्रयोगान्तरमाह—गिर्वण इति । गिर्वण (ग्राम. 5.9.195.1) इत्येतत्साम सदा प्रयुञ्जीत । उक्तनियमापेक्षः चशब्दः । अस्य हरिश्रीरिति निधनस्य स्थाने मयि श्रीरिति निधनं कुर्यात् । एवं कृते श्रीमान् धान्यादिसमृद्धिमान् भवति ॥

भ - अथ श्रीमात्रं कामयमानस्य आह—गिर्वण इति । अस्य हरिश्रीरिति स्थाने मयि श्रीरिति निधनं कुर्यादिति ॥

---

2. RAl. भुमिश्चरता (णा Al.) दिकं for भूमेः खननादिकम्.

5. RAl. अक्षरणम for अकरणम्.

14. RAl. प्रयुञ्जानः तत्र स्वाध्यायाविशेषया मयि for प्रयुञ्जीत । मयि.

17. AB om. हरिश्रीरिति निधनस्य स्थाने; A हरिः for मयि.

18. P. अन्नादि for धान्यादि.

20. RAl. add गिर्वणः पाहि न इति स्थाने before हरि॰.

4. त्रीन्वोदकाञ्जलीन्त्सदाचामेदयꣳ सहस्रमानव इत्येताभ्याꣳ श्रीरिति चोत्तरस्य निधनं कुर्यात् । श्रीमान् भवति ॥ २ ॥

सा - अथ श्रीकामस्य प्रयोगान्तरमाह-त्रीन्वेति । वाशब्दो विकल्पार्थः । स च पूर्वप्रयोगापेक्षः । त्रीनुदकाञ्जलीन् सदा आचामेत् प्रतिदिनं पिबेत् । केनेत्युच्यते— अयं सहस्रमानव (ग्राम. 12. 12. 458. 1-2) इत्येताभ्यां सामभ्याम् । विहितयोः उत्तरस्य साम्नोऽन्ते श्रीरिति निधनं कुर्यात् । श्रीमान् भवति ॥ इति ॥ २ ॥

भ - तथा श्रीकामस्य प्रयोगान्तरमाह—त्रीन्वेति । अयं सहस्रमानव इत्यनयोरुत्तरस्य श्रीरिति निधनं कुर्याद्वा इति । निधनस्थाने इति ॥ २ ॥

5. सक्तुमन्थं दधिमधुघृतमिश्रमा त्वा विशन्त्विन्दव इत्येतेन संनयेत् । आ मा विशन्त्विन्दवो न मामिन्द्रातिरिच्यत इत्येतेन पिबेत् । अलक्ष्मीं नुदते ॥

सा - अथालक्ष्मीनोदनप्रयोगमाह—सक्तुमन्थमिति । सक्तुमन्थं द्रवद्रव्यमिश्राः सक्तवः सक्तुमन्थः । अत्र मिश्राणि दधिमधुघृतानि । तैर्मिश्रं सक्तुमन्थम् आ त्वा विशन्तु(ग्राम. 9.5.197.1)इत्येतेन संनयेत् संयोजयेत् । संनयनमन्त्रमेव आ मा विशन्त्विन्दवः समुद्रमिव सिन्धवो न मामिन्द्रातिरिच्यत इति ऊहित्वा एतेन मन्त्रेण तं मिश्रितं मन्थं पिबेत् । एवं कुर्वन् अलक्ष्मीं नुदते बहुलक्ष्मीको भवतीत्यर्थः ॥

---

10. RAl. add निधनं before श्रीः.

11. My मण्डं for मन्थं; My मिश्रं कृत्वा for मिश्रमात्वा.

15. P. दधिमिश्राः Bl. दधिद्रव्यमिश्राः for द्रव०; B. सक्तुमयम् for सक्तुमन्थः ; P. मिश्रितानि द्रव्याणि A. दधिमिश्राणि मधुमिश्राणि घृतमिश्राणि for मिश्राणि दधि०; Bl. दधिमधुकृतानि for दधिमधुघृतानि; P. om. तैर्मिश्रं... इन्द्रातिरिच्यते; Bl. om. तैर्मिश्रं सक्तुमन्थम् ; B. तैलमिश्रं सक्तुमयं for तैर्मिश्रं..

17. A. संयमन०, B. संयोजन० for संनयन०; A. आ त्वा for आ मा; A. न त्वाम् for न माम् .

18. A. मिश्रं for मिश्रितं ; B. मण्डं for मन्थं.

**भ** - ऽलक्ष्मीनाशनार्थं प्रयोगमाह— **सक्तुमन्थ**मिति । द्रवद्रव्यमिश्राः सक्तवः सक्तुमन्थः । किमात्मकोऽसौ सक्तुमन्थः ? तत्रा-[ह]**दधिमधुघृतमिश्र**मिति । दधिमधुघृतमिश्रसक्तुमन्थ[म]नेन साम्ना **संनयेत्** । एतेषां संनयनेन सक्तुमन्थं संपादयेदित्यर्थः । अथ सक्तुमन्थस्य पाने संनयनमन्त्रमा **त्वा विशन्त्विन्दव** इत्येतमूहेन प्रत्यगाविष्टं कुर्यात् । **आ त्वा (मा?)** विशन्त्विन्दवः समुद्रमिव सिन्धवो न मामिन्द्रातिरिच्यत इति ॥

**6.** **तिष्येण घृतं क्रीणीयात् । आयाहि सुषुमा हि त** (ग्राम. 8.5.191.1) **इत्येतेन पिबेत् । अलक्ष्मीं नुदते ॥**

**सा** - अथात्रैव प्रयोगान्तरमाह—**तिष्येण घृत**मिति । **तिष्येण** पुष्यनक्षत्रेण युक्ते चन्द्रमसि **घृतं क्रीणीयात्** । तत्र क्रीतं घृतं पात्रे निधाय प्रतिदिनमनेन साम्ना पिबेत । शिष्टं स्पष्टम् ॥

**भ** - अथालक्ष्मीनाशनार्थं प्रयोगान्तरम्—**तिष्येणे**ति । **तिष्येण** युक्ते चन्द्रमसि । तिष्यनक्षत्रमित्यर्थः । तस्मिन्नक्षत्रे क्रीतं [घृतं] पात्रे निधाय **आयाहि सुषुमे** (ग्राम. 8.5.191.1) ति साम्ना प्रतिदिनं **पिबेत्** । संवत्सरमिति द्रष्टव्यम ॥

**7.** **गौरान्त्सर्षपांस्तिष्येण चूर्णं कारयित्वेन्द्रेहि मत्स्यन्धस इत्येतेन संयूय तैर्मुखं पाणी पादौ च सर्वाणि चाङ्गानि सर्वांश्च संश्लेषानुत्सादयन्नलक्ष्मीं नुदते ॥ ३ ॥**

---

2. किमात्मकः *See*. CN.
4. RAl. पानेन for पाने.
5. Al. समूहेन for ऊहेन.
9. ABBl. om. अथ&आह; ABBl. तत्र for अत्र.
10. PBl. om. पुष्य; AB om. तत्र.
13. RAl. कृतं for क्रीतं.
14. RAl. शांता for साम्ना.

सा - अथात्रैव प्रयोगान्तरमाह—**गौरान् सर्षपानिति** । **संश्लेषाः** संधयः मुखादिसंध्यन्तानि । उक्तं द्रव्यम् इन्द्रेही- (ग्राम. 5.7.180.1) त्यनेन संयूय संमिश्रय तैः चूर्णितैः सर्षपैः प्रतिदिनम् **उत्सादयन्** संवत्सरपर्यन्तमुद्वर्तयन् **अलक्ष्मीं नुदते** । एवमुत्तरत्र पूर्वत्र च यत्र यत्र कालावधिर्नोक्तः तत्र तत्र सर्वत्र संवत्सरपर्यन्तमिति द्रष्टव्यम् । शेषः स्पष्टोऽर्थः ॥ ३ ॥

भ - अथास्मिन्नेव प्रयोगान्तरम्—**गौरानिति** । चूर्णितान् गौरसर्षपान् साम्ना अद्भिः संयूय एतेन कल्पेन मुखादी-[नु-]त्सादयेदुद्वर्तयेत् । संश्लेषा अङ्गसंधय इति ॥ ३ ॥

**8. गौरान्त्सर्षपानग्नौ जुहुयाद्यद्वीडाविन्द्र यत् स्थिर (ग्राम. 5.10.207.1) इत्येतेन हिरण्यं लभते ॥**

सा - अथ हिरण्यार्थं प्रयोगमाह—**गौरानिति** । शतकृत्वो दशावरं **जुहुयात्** । स्पष्टमन्यत् ॥

भ - अथ हिरण्यलाभस्य—**गौरानिति** । जुहुयाच्छतकृत्वो दशावरमिति ॥

**9. व्रीहियवानग्नौ जुहुयात् सुनीथोघ स मर्त्यं (ग्राम. 5.10.206.1) इत्येतेन । धान्यं लभते ॥**

सा - अथ धान्यार्थप्रयोगमाह—**व्रीहियवानिति** । एतेन संवत्सरपर्यन्तं **व्रीहियवान् अग्नौ जुहुयात्** । शतकृत्वो दशावरमिति ॥

---

1. AB om. अथ & आह.
3. AB om. संमिश्रय ; and om. चूर्णितैः; Bl. om. संवत्सरपर्यन्तम्.
4. Bl. om. पूर्वत्र च; P om. उक्तः.
5. ABBl. om. सर्वत्र; Bl. om. शेषः स्पष्टोर्थः.
7. RAl. संयूयेत्ये[ते]न for संयूय एतेन.
11. P. adds गौरान् सर्षपान् अग्नौ जुहुयात् before शत०
12. P. इति for जुहुयात्.

भ - अथ धान्यलाभस्य—व्रीहियवाविति ।

**10.** व्रीहियवौ सर्पिर्मधुमिश्रावास्येऽवधाय सपूर्व्यो महोनाम् (ग्राम. 9.1.355.1) इत्येतं मनसानुद्रुत्यान्ते स्वाहाकारेण निगिरेत् । एवꣳ सदा प्रयुञ्जानः सहस्रं लभते ॥

सा - अथ सहस्रसंख्यादिहिरण्यलाभस्य प्रयोगमाह—व्रीहियवाविति । व्रीहियवौ तयोस्तण्डुलानित्यर्थः । सिद्धमन्यत् ॥

भ - अथ सहस्रसंख्या[-दि-]हिरण्यलाभस्य—व्रीहियवाविति ॥

**11.** इम उ त्वा विचक्षत (ग्राम. 4.3.136.1) इत्येतेनाहुतिसहस्रं जुहुयात् । सहस्रं लभते ॥

सा - अथ तत्रैव प्रयोगान्तरमाह—इम उ त्वेति । उक्तसाम्ना आज्याहुतिसहस्रं संवत्सरपर्यन्तं जुहुयात् । एवं सति सहस्रसंख्याकं धनं लभते ॥

भ - [अथ तत्रैव प्रयोगान्तरम्—इम उ त्वेति] [ . . . ? ] आज्येन होमः संवत्सरमिति ॥

**12.** मासोपोषितो बिल्वानां दधिमधुघृताक्तानाꣳ श्रायन्तीयेना- (ग्राम. 7.4.267.1) ष्टसहस्रं जुहुयात् । सिद्धे सौवर्णान्यसिद्धे राजतानि ॥

---

3. RAl. om. इत्येतं onward and links this इत्येतेनाहुतिसहस्रं of the paragraph 11. Hence the commentary in between the lines is lost.

12. BBl. सहस्र आज्यं for आज्याहुति.

17. A has lost the text and commentary from अष्टसहस्रं onward. It resumes तिष्ठन् असकृत् बहुवारं. . .which is the commentary on paragraph 10 अनपेक्षितो वासकृत्, of प्रापाठक 2, P. 163

**सा** - अथ हिरण्यार्थिनः प्रयोगमाह—**मासोपोषितः** इति । मासोपोषितः सन् **बिल्वानां** तत्पुष्पाणां फलानां वा दध्याद्युक्तानाम् अष्ट सहस्राणि उक्तेन साम्ना **जुहुयात्** । **सिद्धे** संपूर्णव्रताङ्गयुक्ते कर्मणि **सौवर्णानि** सुवर्णसंघान् लभते । **असिद्धे** कर्मवैकल्ये सति **राजतानि** रजतसंघान् लभते ॥

**भ** - अथ हिरण्यार्थिनः प्रयोगान्तरम्—मासोपोषित इति । **बिल्वानां** बिल्वपत्राणां तत्फलानां **अष्टसहस्रं** अष्टौ सहस्राणि **जुहुयात्** । नाष्टाधिकं सहस्रमिति गृह्यते । अष्टाधिकस्य क्वचिदप्यदर्शनात् **सिद्धे** संपूर्णव्रताद्यङ्गयुक्तेऽस्मिन् कर्मणि **सौवर्णानि** सुवर्णसंचयं लभते । **असिद्धे** उक्तविपरीते **राजतानि** रजतसंचयं लभते इति ॥

**13. नैयग्रोधं दन्तपवनं घृतमधुलिप्तं गव्यो षु ण इत्येताभ्यामनिष्ठीवन्त्संवत्सरं भक्षयन्त्सहस्रं लभते सहस्रं लभते ॥ ४ ॥ १ ॥**

**सा** - अथ सहस्रहिरण्यार्थिनः प्रयोगान्तरमाह—**नैयग्रोधमिति** । **नैयग्रोधं** न्यग्रोधसंबन्धि काष्ठं **दन्तपवनं** दन्तधावनं **घृतमधुलिप्तं** घृतेन मधुना च लिप्तं तेन **गव्यो षु ण** (ग्राम. 5. 8. 186. 1-2) इत्येताभ्याम् **अनिष्ठीवन्** निष्ठीवनरहितं यथा भवति तथा **संवत्सरं** संवत्सरपर्यन्तं प्रतिदिनं **भक्षयन्** दन्तधावनं कुर्वन् **सहस्रं** सहस्रसंख्याकं धनं **लभते** ॥

द्विरुक्तिः खण्डसमाप्त्यर्था ॥ ४ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे तृतीयाध्याये प्रथमः खण्डः ॥ १ ॥

**भ** - सहस्रसंख्यहिरण्यार्थिनः प्रयोगान्तरम्—**नैयग्रोधमिति** । सिद्धमिदमिति ॥ ४ ॥ १ ॥

॥ प्रथमोऽनुवाकः ॥

---

1. B. हिरण्यार्थिनां for हिरण्यार्थिनः.
3. B. सौवर्णान् for सौवर्णानि.
4. Bl. om. सुवर्णसंघान्; B. राजतान् for राजतानि.
16. BBl. adds कार्यं after लिप्तं.

# द्वितीयः खण्डः

**1. त्रिरात्रोपोषितो भद्रो नो अग्निराहुत (ग्राम. 3. 12. 111.1) इत्येतेनाहुतिसहस्रं जुहुयात् । सहस्रं लभते ॥**

सा - अथ सहस्रधनार्थिनः प्रयोगान्तरमाह त्रिरात्रोपोषित इति । त्रिरात्रोपोषितः सन् उक्तेन साम्ना आज्याहुतिसहस्रं जुहुयात् । तथा सति सहस्रसंख्याकं धनं लभते ॥

भ - अथ सहस्रहिरण्यार्थिनः प्रयोगः—त्रिरात्रोपोषित इति ।

**2. औदुम्बरीर्वा समिधो घृताक्ताः सहस्रं जुहुयात् । गा लभते ॥**

सा - अथ गोकामस्य प्रयोगमाह—औदुम्बरीर्वेति । अत्र वाशब्दः पूर्वोक्तेन कल्पेन सह विकल्पार्थः । त्रिरात्रोपोषितः पूर्वोक्तेनैव साम्ना आज्याहुति-सहस्रं वा घृताक्तमौदुम्बरसमित्सहस्रं वाग्नौ जुहुयात् । तथा सति गाः प्राप्नोति ॥

भ - अथ गोकामस्य औदुम्बरीरिति । पूर्वोक्तेन सह विकल्पार्थं वाशब्दप्रयोगः । त्रिरात्रोपोषितः साम्ना पूर्वोक्तेनैव आहुतिसहस्रं वा घृताक्तमौ-दुम्बरसमित्सहस्रं वाग्नौ जुहुयात् । गा लभत इति ॥

**3. व्रीहियवानग्नौ जुहुयात् । धान्यं लभते ॥**

---

9. R. om. घृताक्ताः सहस्रं जुहुयात् । गा लभते ।

10. MyMSS. गां for गाः.

12. BBl. पूर्वेण विकल्पार्थः for पूर्वोक्तेन... ; P. त्रिरात्रेण उपो० त्रिरात्रोपो० ;P. पूर्वेणैव for पूर्वोक्तेनैव.

13. P. ०हस्रेण for ०सहस्रं.

14. R. om. पूर्वोक्तेन...आहुतिसहस्रं वा.

सा - अथ धान्यार्थिनः प्रयोगमाह—**व्रीहियवानिति** । उक्तनियमः सन् पूर्वोक्तेनैव साम्ना **व्रीहियवान् अग्नौ जुहुयात्** ॥

भ - **व्रीयवानिति** । त्रिरात्रोपोषितः पूर्वोक्तेनैव साम्ना जुहुयाद्धान्यलाभार्थमिति ॥

**4. द्वादशरात्रोपोषित एवा ह्यसि वीरयुरित्येतेनाहुतिसहस्रं जुहुयात् । ग्रामं लभते । एतांश्च सर्वान् कामानवाप्नोति ॥**

सा - अथ ग्रामकामस्य पूर्वोक्तसहस्रहिरण्यादिकामस्य च सहप्रयोगमाह—**द्वादशरात्रोपोषित** इति । **द्वादशरात्रोपोषितः** सन् **एवा ह्यसि** (ग्राम. 6.12.232.1) इत्युक्तेन साम्ना आज्याहुतिसहस्रं **जुहुयात्** । एवं कृते सति **ग्रामम्** अवाप्नोति । पूर्वोक्तान् **सर्वान् कामान्** सहस्रहिरण्यादिकान् च अवाप्नोति ॥

भ - अथ ग्रामकामस्य पूर्वोक्तसहस्रहिरण्यादिकामस्य च साधारणप्रयोगमाह—द्वादशरात्रोपोषित इति । स्पष्टार्थमिति ॥

**5. श्रत्ताष्टकं** (ग्राम. 10. 3. 371. 1-8) **प्रयुञ्जानः प्रथमेन हिरण्यं लभते; द्वितीयेन धान्यं; तृतीयेन पशून्; चतुर्थेन पुत्रान्; पञ्चमेन ग्रामान्; षष्ठेन यशः; सप्तमेन ब्रह्मवर्चसमष्टमेन स्वर्गं लोकमवाप्नोति ॥**

सा - अथ हिरण्यादिकामिनां प्रयोगमाह—**श्रत्ताष्टकमिति** । **श्रत्ताष्टकम्** इति सामान्यवचनम्; प्रथमेन इत्यादि विशेषवचनम् । उक्ताष्टकमध्ये प्रथमं साम नित्यं **प्रयुञ्जानः हिरण्यं लभते** । **द्वितीयेन धान्यम्** इत्यादि स्पष्टम् ॥

भ - **श्रत्ताष्टकमिति** । स्पष्ट एवार्थ इति ॥

---

8. Bl. om. सह.

10. Bl. om. कृते.

**6. संवत्सरं गोग्र्रासमाहरेद्गावश्चिद्धा स मन्यव इत्येतेनानन्त्यां विन्दते श्रियम् ॥**

सा - अथानन्तश्रीकामस्य प्रयोगमाह—**संवत्सर**मिति । **गावश्चिद्धा** (ग्राम. 11. 6. 404. 1) **इत्येतेन** साम्ना संवत्सरपर्यन्तमेकस्या गोः पर्याप्तं **ग्रासं आहरेत्** । आहृत्य दद्यादित्यर्थः । तथा सति **आनन्त्याम्**, स्वार्थिकस्तद्धितः, इयत्तारहितां **श्रियं विन्दते** लभते ॥

भ - अथानन्तसमृद्धिं कामयमानस्याह—**संवत्सर**मिति । [**गोग्रासं**] गोरेकस्य[ाः] पर्याप्तं ग्रासम् । [**आनन्त्याम्**] अनन्तामित्यर्थे स्वार्थिकः तद्धितः । स्पष्टमन्यदिति ॥

**7. वैरूपाष्टकं** (आ.गा.1.1.1.1-8) **नित्यं प्रयुञ्जानो लक्ष्मीं जुषते ॥**

सा - अथ लक्ष्मीकामस्य प्रयोगमाह—**वैरूपाष्टक**मिति । स्पष्टोऽर्थः । श्रीः सर्वकामसमृद्धिः, लक्ष्मीः दर्शनीयत्वसहिता समृद्धिरिति भेदः ॥

भ - **वैरूपाष्टक**मिति । स्पष्टोऽर्थ इति । श्रीः सर्वकामसमृद्धिः, लक्ष्मीर्दर्शनीयत्वसहिता समृद्धिरिति विवेक इति ॥

**8. अन्त्यं वा जानुदघ्न उदके तिष्ठन् ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—**अन्त्यं** **वे**ति । वाशब्दः पूर्वप्रयोगेण सह विकल्पार्थः । उक्तसाम्नां मध्ये **अन्त्यं** (आ. गा. 1.1.1.8) साम **जानुदघ्ने** जानुप्रमाणे **उदके तिष्ठन्** नित्यं प्रयुञ्जानो लक्ष्मीं लभते ॥

भ - अथ लक्ष्मीकामस्य प्रयोगान्तरम्—**अन्त्यं** **वे**ति । **अन्त्यं** वैरूपं **जानुदघ्न उदके तिष्ठ**न्नित्यं प्रयुञ्जानो लक्ष्मीं लभते । विपरिणामेन संबन्ध इति ॥

---

3. BBl. अपरिमितश्रीसाधनप्रयोगम् for अनन्त०...

5. Bl. om. तथा सति; P. om. स्वार्थिकस्तद्धितः.

8. RAl. इत्यर्थसार्थकविरि अर्द्धे (Al. विविश्रद्धि for विरि अर्द्धे) for इत्यर्थे...तद्धितः ।

10. PMB प्रयुञ्जानं for प्रयुञ्जानः.

13. B. भावः for भेदः.

19. B. शतवारं दशावरं for नित्यं प्रयुञ्जानः.

**9. नाभिदघ्ने धान्यं कक्षदघ्ने पशूनास्यदघ्ने पुत्रान् ग्रामं च ॥**

सा - अथोक्तं साम धान्यादिफलसाधनतया विनियुङ्क्ते—**नाभिदघ्न** इति । स्पष्टोऽर्थः ॥

भ - अथान्त्यस्य प्रयोगफलमाह । विशेषान्निमित्तविशेषबन्धनानाह—**नाभिदघ्न** इति । पुत्रग्रामकामस्य वा आस्यदघ्ने स्थित्वा प्रयोग इति ॥

**10. अनपेक्षितो वासकृद् गीत्वोत्तीर्णः सहस्रं लभते ॥**

सा - अथ सहस्रधनकामिनः प्रयोगमाह—**अनपेक्षित** इति । **वा**-शब्दः पूर्वोक्तस्यैव साम्नः प्रयोगान्तरसाधनत्वद्योतनार्थः । **अनपेक्षितः** उदके तिष्ठन् **असकृद्** बहुवारं वैरूपस्यान्त्यं साम (आ. गा. 1. 1. 1. 8.) **गीत्वा उत्तीर्णः** उदकादुत्थितः सन् **सहस्रं** धनं **लभते** ॥

भ - अथ वैरूपान्ते प्रसङ्गात् सहस्रकामस्याप्यन्यं प्रयोग इत्याह—**अनपेक्षित** इति । **अनपेक्षितः** जानुदघ्नत्वविशेषणनिरपेक्षः उदके तिष्ठन् **असकृद्** बहुवारं **गीत्वा उत्तीर्णः** उदकात् **सहस्रं लभते** ॥

**11. आहुतिसहस्रं वा जुहुयात् सामान्तेषु स्वाहाकारैः ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—**आहुतिसहस्रं** वेति । स्पष्टोऽर्थः ॥

भ - अथास्मिन्नेव प्रयोगान्तरमाह—**आहुतिसहस्रं** वेति । वैरूपान्त्येना-(आ. गा. 1. 1. 1. 8.)**हुतिसहस्रं वा जुहुयात्** । स्पष्टमन्यदिति ॥

---

3. Bl. धान्यादेः फलस्य for धान्यादिफल.

5. RAl. अन्यस्य for अन्त्यस्य.

10. A. *See* p. 158 n. 17. A has lost the text and commentary from अष्टसहस्रं...P. 158, l.17, to उदके.

13. RAl. वैरूपान्ने for वैरूपान्ते.

14. R. जानुदघ्ना, Al. जानुदघ्नेत्वा for जानु...

20. RAl. सारम् for स्पष्टम्.

**12. एतेषां कल्पानां यथा भूयस्तथा श्रेयस्तथा श्रेयः ॥ २ ॥**

सा - अथोक्तकाम्यप्रयोगप्रकरणे फलविषयं कंचिद्विशेषमाह— एतेषां कल्पानामिति । एतेषां काम्यप्रकरणोक्तानां कल्पानां "श्रीमान् भवति", "अलक्ष्मीं नुदते", "सहस्रं लभते" इत्यादीनाम् एकफलसाधनानां बहूनां प्रयोगाणां यथा येन प्रकारेणावृत्त्यादिलक्षणेन भूयः प्रयोगस्य भूयस्त्वं भवति तथा फलं श्रेयः प्रशस्तता भवति ॥

अभ्यासः खण्डसमाप्त्यर्थः ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे तृतीयाध्याये द्वितीयः खण्डः ॥ २ ॥

भ - अस्मिन् प्रकरणे समानफला बहवः कल्पा उपस्थिताः । किं तेषां समानमेव फलमुत अल्पभूयस्त्वापेक्ष्यफलवैषम्यमपि ? इत्येतदाह— एतेषां कल्पानामिति । एतेषां कल्पानां कृते यथा भूयो भूयस्त्वं भवति तथा श्रेयः प्रशस्तता भवति । फलविशेषणहेतुत्वं भवति ॥

॥ द्वितीयोऽनुवाकः ॥

---

3. Bl. विषये for विषय

7. P. अतिप्रशस्यं for प्रशस्तता.

8. ABBl. om. अभ्यासः...अर्थः ।

9. A om. इति...तृतीयाध्याये; B. om. इति...ब्राह्मणे.

11. R. फलाफलहरः काल्पो उपतिष्ठाः, Al. समानफलाबफलहबः कल्पाह्युपतिष्ठाः for समानफला बहवः...

12. RAl. इत्यादिम् for इत्येतत् .

14. RAl. प्रशस्ततरा for प्रशस्तता; RAl. फला for फल.

# तृतीयः खण्डः

1. गाः प्रकाल्यमानाश्चोपकाल्यमानाश्च सदोपतिष्ठेत गव्यो षु ण इत्येताभ्यां स्फीयन्ते । बहुला भवन्ति ॥

सा [illegible] गोसमृद्धिसाधनप्रयोगमाह—गाः प्रकाल्यमानाः इति । गवां शरीरपुष्ट[illegible]त्पत्तिद्वारेणाभिवृद्धिं च कामयमानः, गाः प्रकाल्यमानाः संचारदेशं प्रति प्र[illegible]ल्यमानाश्च पुनश्चोपकाल्यमानाः गृहं प्रति प्रस्थाप्यमानाश्च गव्यो षु ण (ग्राम 5.8.186.1-2) इत्येताभ्यां सदोपतिष्ठेत् । एवं कृते गावः स्फीयन्ते प्रवर्धन्ते । प्रसवैर्बहुलाश्च भवन्ति ॥

भ - स्वाः याः प्रातः प्रकाल्यमाना गाः [संचारदेशं] प्रति प्रस्थाप्यमानाः सायाह्ने गोष्ठं प्रति उपकाल्यमाना उपनीयमानाश्च [ताः] सदा प्रत्यहम् उपतिष्ठेत द्वाभ्यां सामभ्याम् स्फीयन्ते आप्यायन्ते । बहुलाश्च [प्र]सवैर्भवन्ति इति ॥

2. सदा भोजनस्योपनीतस्याग्रमग्नौ जुहुयादग्ने विवस्वदुषस इति पूर्वेण । बलिं चोत्तरेण कुर्याद् । बहुपशुधनधान्यो भवति ॥

सा - अथ पश्वादिबाहुल्यकामस्य प्रयोगमाह—सदा भोजनस्येति । भोजनस्य भोजनार्थम् उपनीतस्य, पञ्चमहायज्ञशेषस्यैवादेशः अग्रम् अग्रभागं

---

3. RAl. तिष्ठेत for तिष्ठेत.

6. A. उत्पादन for उत्पत्ति.

7. P. चाल्यमाना for प्रचाल्यमानाः; P. चाल्यमानाः for प्रस्थाप्यमानाः.

8. After इत्येताभ्यां A adds: स्फीयन्ते बहुला भवन्तीति । गवां शरीरपुष्ट्यपत्योत्पादनद्वारेणाभिवृद्धिं च; P. उपतिष्ठेत for उपतिष्ठेत्.

10. संचारदेश *See* CN.

18. P. om. आदेश ; ABBl. om. अग्रम् अग्रभागं.

सदा प्रतिदिनम् अग्नौ औपासनाग्नौ जुहुयात् अग्ने विवस्वद् (ग्राम. 1 .1. 40. 1) इति प्रथमेन । तस्योत्तरेण (ग्राम. 1. 1. 40. 2) साम्ना बलिं च कुर्यात् । एवं कृते पश्वादिबाहुल्यं भवति ॥

भ - सदा भोजनस्येति । भोजनार्थमुपनीतस्य [पञ्च ]महायज्ञशेषस्य भोजनस्यैकदेशः प्रतिदिनमग्नौ औपासने पञ्चमे वा जुहुयात् । बलिं [च] कुर्यात् । साम्ना प्रथमेन होमः, उत्तरेण बलिरिति ॥

**3. अष्टरात्रोपोषितोऽमावास्यायां निश्येकवृक्षे क्षीरिण्यरण्ये माꣳसꣳ सुसꣳस्कृतमेकतृप्त्यवरार्ध्यं माणिभद्रायोपहरेदेष स्य ते मधुमाꣳ इन्द्र सोम** (ग्राम. 15. 6. 531 1) **इत्येतेन । हिरण्यद्रोणं लभते ॥**

सा - अथ द्रोणपरिमितहिरण्यार्थप्रयोगमाह — अष्टरात्रोपोषित इति । उक्तप्रकारेणाष्टरात्रोपवासं कृत्वा अमावास्यायां निशि एकवृक्षे क्षीरिण्यरण्ये एक एव विजातीयवृक्षान्तररहितः क्षीरी न्यग्रोधादिः यस्मिन्नरण्ये तत्र । मांसम् अजवराहादिसाध्यम् । एकस्य तृप्तिर्येन मांसेन भवेत्, तदेकतृप्ति तदेव अवरार्ध्यं मध्यं यस्मिन् तद् एकतृप्त्यवरार्ध्यम् । एकपुरुषतृप्तिसाधनान्यूनं (? न्यूनेन) भवितव्यम् । ततोऽप्यधिकं भवतु वा मा वेत्यर्थः । कल्पितं मांसं सुसंस्कृतम् अपाकातिपाकाद्यभावेन सुभृतं माणिभद्राय महाराजानुचरायोद्दिश्य उपहरेत् उक्तेन साम्ना । तथा सति हिरण्यद्रोणं लभते ॥

---

1. AB om. अग्नौ.
2. P. प्रथमेन साम्ना; बलिं चोत्तरेण कुर्यात for प्रथमेन ।...
5. R. याचने for पञ्चमे.
7. T वृक्ष for वृक्षे.
8. My TA. अवराध्यं for अवरार्ध्यं.
12. PBBl. om. उक्त...कृत्वा.
13. B. सजातीय, Bl. जातीय for विजातीय; AB. वने एकमांसं for अरण्ये तत्र । मांसम्; Bl. वने for अरण्ये and om. तत्र.
15. AB. मध्यमं for मध्यं; Bl. om. मध्यं.
16. A. कल्पनीयं, P. तत् for कल्पितं.
17. P. adds अन्नादिवत् after सुसंस्कृतं; P. पाकादिभावेन, AB. पक्कादितिपाकाद्यभावेन, Bl. अपाकाद्यति० for अपाकाति० ; P. सुश्रुतं for सुभृतं.
18. P. एवं for तथा.

भ - अष्टरात्रोपोषित इति । एकवृक्षे क्षीरिण्यरण्ये एकजातीया न्यग्रोधादयः क्षीरिणो वृक्षास्तस्मिन्नरण्ये । एकतृप्त्यवरार्ध्यं यावता एकस्य पुरुषस्य तृप्तिर्भवति तावदेकतृप्ति तस्मादन्यूनमर्घ्यं मांसं सुसंस्कृतं सम्यक् [पक्कं] माणि[भद्राय]उपहरेत् [एष स्य त इत्येतेन] साम्ना । हिरण्यद्रोणं, द्रोणः कलशस्तत्परिमितं हिरण्यं लभते इति ॥

4. त्रिरात्रोपोषितः शुक्लचतुर्दश्याꣳ शौनं माꣳसं पायसं वोपहरेत् त्रिरस्मै सप्त धेनवो दुदुह्रिर इत्येतेन । दैवान् पोषान् पुष्यति । बहुपुरुषं चास्य भवति । क्रियाश्चानेन कुरुते ॥

सा - अथ दिव्यभोगार्थिनो बह्वनुचरार्थिनश्च तत्साधनप्रयोगद्वयमाह— त्रिरात्रोपोषित इति । त्रिरात्रोपोषितः तदन्ते शुक्लचतुर्दश्यां रात्रौ शौनं मांसं पायसं वा इच्छया माणिभद्रायैव त्रिरस्मै सप्त धेनव (ग्राम 16.9.560.1) इत्येतेन साम्ना उपहरेत् । एवं सति दैवान् पोषान् देवसंबन्धिनीः पुष्टीः पुष्यति प्राप्नोति । अस्य प्रयोक्तुः बहुपुरुषं च भवति । बहवः पुरुषाश्च भवन्ति । अनेन बहुपुरुषेण क्रियाश्च कर्तव्यानि कर्माण्यपि कुरुते ॥

---

3. RAl. एव for एक; RAl. अध्यसामं for अर्घ्यं मांसं; RAl. सुसंस्कृतमस्य (Al सम्यक् for अस्य) कर्माणि उपहरेण (Al. हरेव for हरेण) for सुसंस्कृतं...उपहरेत्.

6. P RAl. सौनं, M शौ (सौ) नं for शौनं *See* also CN.

10. P. पुरुष for अनुचर; P. deletes द्वयम्.

12. PBl. om. एव; BBl. सुश्रव इति वर्गेण उपहरेत् for त्रिः०...;

13. A. om. एतेन साम्ना. After उपहरेत् AB add फलं तूत्तरप्रयोगोक्तमेव द्रष्टव्यम् and om. the whole commentary thereafter from एवं to कुरुते; Bl. असुरसंबन्धिपुष्टिं for देवसंबन्धिनीः.

14. Bl. after प्राप्नोति add: अथ त्रिरात्रोपोषितः तदन्त इति. P. पुरुषः for पुरुषं.

15. P adds: स्वेन after क्रियाश्च.

भ - त्रिरात्रोपोषित इति । शौनं शुनो विकारम् । माणिभद्रायै-वोपहारः । दैवान् देवसंबन्धिनः देवानां ये पोषास्तान् पुष्यति लभते । बहुपुरुषं बहवः पुरुषाः परिचारकाश्च भवन्ति । अनेन बहुपुरुषेण क्रियाश्च कुरुते । साम्नि कीर्तिताः सर्वाः पुरुषैः सिद्ध्यन्ती( - न्ते ? इ)ति ॥

**5. त्रिरात्रोपोषितः कृष्णचतुर्दश्यां मत्स्यानुपहरेन्महाराजाय संश्रवस इति वर्गेणासुरान् पोषान् पुष्यति । बहुपुरुषं चास्य भवति । क्रियाश्चानेन कुरुते ॥ १ ॥**

सा - अथासुरभोगार्थिनो बहुपुरुषार्थिनश्च तत्साधनप्रयोगमाह— त्रिरात्रोपोषित इति । संवत्सरं त्रिरात्रोपोषितः तदन्ते कृष्णचतुर्दश्यां रात्रौ महाराजाय माणिभद्राय स्वामिने संश्रवसे इति वर्गेण मत्स्यानुपहरेत् । आसुरान् पोषान् असुरसंबन्धिनीः पुष्टीः पुष्यति व्याप्नोति । शेषं पूर्ववद्व्याख्येयम् ॥ १ ॥

भ - त्रिरात्रोपोषित इति । सिद्धप्रायं स्पष्टमिति ॥

**6. अथातो वास्तुशमनम् ॥ २ ॥**

अथ वास्तुप्रयोगमाह—अथातो वास्तुशमनमिति । अथातःशब्दौ पूर्ववदवगन्तव्यौ । वास्तुशमनं वास्तु नूतनगृहाधिष्ठानम्, तस्य शमनं तत्रत्यरक्षःप्रभृतीनां निवारणमित्यर्थः । तत्कल्पः उच्यत इति शेषः ॥ २ ॥

---

1. RAl. श्यै-(श्ये Al.) नं for शौनं.

6. संश्रवसे Sce CN. AB My RAl. सुरान् for आसुरान्.

8. AB om. असुर..संवत्सरं; Bl. om. the whole commentary of this paragraph.

10. P om. माणिभद्राय स्वामिने.

11. AB. सुरान ...सुरसंबन्धिनीं च पुष्टिं for आसुरान्...; AB. om. शेषं.

12. AB. om. पूर्ववद्व्याख्येयम् and have instead अस्य प्रयोक्तुः... कुरुते of the previous paragraph p. 167. ll. 14-15.

16. A. वास्तु निकेतनं for वास्तु नूतन०

17. B. तत्र for तत्रत्य.

भ - अथातो वास्तुशमनमिति । वास्तुनो निर्मितस्य रक्षःप्रभृतीनां निवारणं कर्म प्रस्तूयते इति ॥

७. प्रदक्षिणं प्रतिदिशं रज्ज्वा यच्छेत् । अवान्तरदेशेषु च । यत्राभिसमेयुस्तत्रोपलिम्पेत् । रज्ज्वन्तेषु च शमीपलाशश्रीपर्णीनां पत्रैर्वास्तूपकिरेत् । अक्षतैश्च सुमनोभिश्च । पूर्वैः प्रोष्ठपदैर्गृहेऽग्निं प्रतिष्ठाप्य धानावन्तं करम्भिणमित्येतद्गीत्वा पायसमग्नौ जुहुयात् । परेषां च पलाशपर्णमध्यमेषु बल्युपहारः प्रजापतये स्वाहेति मध्य उपहरेदिन्द्रायेति पुरस्ताद्वायत्र इत्यवान्तरदेशे यमायेति दक्षिणतः पितृभ्य इत्यवान्तरदेशे वरुणायेति पश्चान्महाराजायेत्यवान्तरदेशे सोमायेत्युत्तरतो महेन्द्रायेत्यवान्तरदेशे वासुकय इत्यधस्तादूर्ध्वं नमो ब्रह्मण इति दिवि बहुपशुधनधान्यहिंरण्यमायुष्मत्पुरुषं वीरसूसुभगाविधवस्त्रीकꣳशिवं पुण्यं वास्तु भवति । चतुर्षु मासेषु प्रयोगः । संवत्सरे वा पुनः प्रयोगः पुनः प्रयोगः ॥ ३ ॥

सा - तस्य वास्तुनः प्रतिदिशं प्रदक्षिणं रज्ज्वा यच्छेत् निगृह्णीयादित्यर्थः । तत्प्रकारस्तु— प्राच्यां दिशि उदगग्रा रज्जुः कार्या । दक्षिणस्यां दिशि प्रागग्रा । प्रतीच्यां दिश्यप्युदगग्रा । उदीच्यां दिशि प्रागग्रा रज्जुः

---

1. R. adds शीतनरं and Al शीतर before रक्षः.

6. T. धानाहव्यं for धानावन्तं; P. गृहीत्वा for गीत्वा.

13. All mss. except RAl. वीरसूः for वीरसू; P. सुभगा अविधव० for सुभगाविधव०.

17. AB तत्प्रकारवचनं Bl. तत्र प्रकारवचनं for तत्प्रकारस्तु.

18. P. उत्तरस्यां for उदीच्यां.

स्थापनीया । तथा अवान्तरदेशेषु च विदिक्षु चतुरश्राश्चतस्रो रेखाः कार्याः । यत्राभिसमेयुः रज्जवः संगता भवेयुः । मध्यदेशे इत्यर्थः । तत्रोपलिम्पेत् तत्र प्रदेशे गोमयेनोपलिम्पेत् । रज्ज्वन्तेषु च प्राच्याद्यष्टदिक्षु इत्यर्थः । तेषु चोपलिम्पेत् । तद् वास्तु सर्वतः शमीपलाशश्रीपर्णीनां पत्रैः उपकिरेत् । श्रीपर्णी बिल्वः । तथा अक्षतैः च सुमनोभिश्च सुगन्धिभिः पुष्पैश्च वास्तु विकिरेत् । पूर्वैः प्रोष्ठपदैः युक्ते चन्द्रमसि गृहे क्वचिद्देशे अग्निं प्रतिष्ठाप्य धानावन्तम् (ग्राम 6.10.210.1) इत्येतद्गीत्वा पायसमग्नौ जुहुयात् । वक्ष्यमाणेन, "प्रजापतये स्वाहा" इति मन्त्रेण । परेषां च इति । चशब्दात् इन्द्रवायुप्रभृतीनां लोकपालानां साम गीत्वा चतुर्थ्यन्तैः स्वाहान्तैर्नामभिर्जुहुयात् । होमान्ते प्रजापतिप्रभृतीनां पलाशपर्णमध्यमेषु पलाशमध्यपर्णेषु बलीनामुपहारः कार्यः । प्रजापतये स्वाहेति उपलिप्ते मध्ये मध्यप्रदेशे बलिं हरेत् । इन्द्राय स्वाहेति पुरस्तात् उपलिप्ते देशे बलिं हरेत् । एतदादि महेन्द्राय स्वाहेत्यन्तं स्पष्टम् ॥

वासुकये स्वाहेति वास्तुमध्ये अधस्तादूर्ध्वं च बल्युपहारः । अत्राधस्तादूर्ध्वमितिशब्दयोर्मध्यबलेः प्राक्पश्चादित्यर्थः । उपर्यधश्च बलिहरणस्याशक्यत्वात् । नमो ब्रह्मण इति दिवि अन्तरिक्षे बलिमुत्क्षिपेत् । एवं कृते तद् वास्तु बहुपशुधनधान्यहिरण्यं भवति । बहुशब्दः प्रत्येकं संबध्यते । पशुर्गवादि । धनशब्देन मणिमुक्तादि । तथा तद्वास्तु आयुष्मत्पुरुषं

---

1. Bl. om. चतुरश्राः.
2. B. मध्यप्रदेशे for मध्यदेशे.
3. A adds: अद्भिश्च सुगन्धि after गोमयेन.
4. A. सर्व for सर्वतः ; Bl. adds: वास्तु after पत्रैः.
5. P. सर्वतः for वास्तु.
7. P. गृहीत्वा for गीत्वा.
8. P. एतस्माच्छब्दात् for चशब्दात्.
10. P. मध्ये for मध्यमेषु.
11. P. देशे for प्रदेशे; P. विकिरेत for हरेत्.
12. A. उक्ते for उपलिप्ते ; P. अन्तस्य for अन्तं.
13. स्पष्टोऽर्थः for स्पष्टम.
15. ABBl. add भागौ after पश्चाद्.
16. P. उपक्षिपेत for उत्क्षिपेत.
18. P. पश्वादिषु for पशुर्गवादि.

बह्वायुष्योपेतं पुत्रभृत्याद्युपेतं भवति । तथा वीरसूसुभगाविधवस्त्रीकम् उक्तगुणविशिष्टस्त्रीयुक्तं भवति । शिवम् अशिवानां रक्षःप्रभृतीनां निवारणात् मङ्गलोपेतम् । अत एव पुण्यं बहुपुण्योपेतं भवति । एवं कृत्वा चतुर्षु मासेषु गतेषु प्रयोगः वास्तुप्रयोगः कार्यः । संवत्सरे वा संपूर्णे पुनः प्रयोगः कार्यः ॥

अभ्यासः खण्डसमाप्त्यर्थः ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे तृतीयाध्याये तृतीयः खण्डः ॥ ३ ॥

भ - प्रदक्षिणं प्रतिदिशं रज्ज्वा यच्छेदित्यारभ्य पुण्यं वास्तु भवतीत्यन्तं वास्तुशमनस्य तत्फलस्य च कीर्तनम् । वास्तुनः प्रतिदिशः प्रदक्षिणं रज्ज्वा यच्छेदिति गृह्णीयात् । प्राच्यां दिश्युदगग्रा रज्जुः कार्या । दक्षिणस्यां प्रागग्रा, प्रतीच्यामुदगग्रा, उदीच्यां प्रागग्रा रज्जुः स्थापनीया । अवान्तरदेशेषु चेति । वास्तुमध्ये प्रागुदगाद्यग्रा स्यात् कोणेषु च । अग्निवाय्वोः दिग्देशसंस्थिते निर्ऋतीशयोर्दिग्देशसंस्थिते च कुर्यादित्यर्थः । यत्र दिक्षु रज्ज्वोऽभिसमेयुरभिसंगच्छेयू रज्ज्वो मध्यदेशे इत्यर्थः । तत्रोपलिम्पेद् गोमयेन । रज्ज्वन्तेषु प्राच्यादिष्वष्टसु दिक्ष्वित्यर्थः । तेषु चोपलिम्पेत् । शमीप्रभृतीनां त्रयाणां वृक्षाणां पत्रैर्वास्तु सर्वमुपकिरेत् । श्रीपर्णी नाम बिल्वः । अक्षतैः सुमनोभिः पुष्पैश्च सुगन्धैर्वोपकिरेत । पूर्वैः प्रोष्ठपदैः

---

1. P. आयुः for आयुष्य; Bl. मित्रादि for भृत्यादि. वीरसूसुभगाविधव० See Note No. 13. p. 169.

2. P. स्त्रीकम् उक्तं for स्त्रीयुक्तं.

4. P. om. कार्यः.

5. AB. om. अभ्यासः...अर्थः.

6. A. तृतीय खण्डः, B. इति तृतीये तृतीयः for इति श्रीसायणाचार्य ..खण्डः.

12. RAl. प्राग्रदग्रा for प्रागुदगाद्यग्रा.

13. RAl. अग्निवाश्वां (यु Al.) दिग्देशसंस्थनैर्ऋतेशं दिदशं स्थिते for अग्निवाय्वोः...

14. RAl. दिग for दिक्षु.

15. RAl. प्राच्यां दिदप्यष्टदि (दिन Al.)श्रणर्थः for प्राच्यादिषु....

16. RAl. श्रीपर्णीनां शेषः for श्रीपर्णी नाम बिल्वः

17. RAl. पुण्यैः for पुष्पैः.

17. P. om. नश्यन्तात्यथः.

युक्ते चन्द्रमसि गृहे कचिद्देशेऽग्निं प्रतिष्ठाप्य धानावन्तमिति साम गीत्वा तस्मिन्नेवाग्नौ पायसं जुहुयाद् वक्ष्यमाणमन्त्रेण प्रजापतये स्वाहेति । परेषां च वायुप्रभृतीनां साम गीत्वा चतुर्थ्यन्तैः स्वाहान्तैर्नाम[भिः] जुहुयात् । होमान्ते तेषां प्रजापतिप्रभृतीनां पलाशपर्णानां मध्यमेषु पलाशपर्णेष्वित्यर्थः । तेषु बलीनामुपहारः कार्यः । प्रजापतये स्वाहेति वास्तुमध्ये उपालिप्ते बलिमुपहरेत् । इन्द्राय स्वाहेति पुरस्तात् उपलिप्ते बल्युपहारः । महेन्द्रायेत्यवान्तरदेशे इत्यन्तं स्फुटार्थम् । वासुकये स्वाहेति वास्तुमध्ये अधस्तादूर्ध्वं च बल्युपहारः । मध्यमबलेः प्राच्यभागे अधस्ताद्बलिः ; पश्चाद्भागे ऊर्ध्वबलिः । नमो ब्रह्मण इति दिवि अन्तरिक्षे बलिं क्षिपेत् । एवं कृते उक्तगुणसंयुक्तं भवति । तद्वास्तु वीरसूसुभगाविधवस्त्रीकमिति वीरस्वश्च सुभगा अविधवाः स्त्रियो यस्मिन् तथोक्तम् । शिवं कल्याणयुक्तं पुण्यं पावनम् । चतुर्षु मासेषु प्रयोगः संवत्सरे वा पुनः प्रयोगः कार्य इति ॥

॥ तृतीयोऽनुवाकः ॥

---

8. RAl. मध्यमवतः for मध्यमबलेः.
10. RAl. वीरं समुभगा अविधवस्त्रीकम for वीरसू०.
12. RAl. add: संवत्सरे वा before कार्यः

# चतुर्थः खण्डः

## 1. अथातोऽदृष्टदर्शनानाम् । १ ॥

सा - अथ वास्त्वभिधानानन्तरमदृष्टदर्शनार्थप्रयोगान् वक्ष्यामीति प्रतिजानीते—अथातोऽदृष्टेति । अथशब्दोऽधिकारद्योतनार्थः । अतःशब्दो हेत्वर्थः । यतोऽदृष्टदर्शनार्थप्रयोगानभिधाने तदनवाप्तिः, अतः अदृष्टदर्शनानाम् अदृष्टा अदृश्यभावात् स्वप्नजागरितविषया अत एव यैर्दृश्यन्ते तान्यदृष्टदर्शनानि तेषां प्रयोगा उच्यन्त इति शेषः ॥ १ ॥

भ - अथातोऽदृष्टेति। अदृष्टा अदृश्यभावा यैर्दृश्यन्ते तेषामदृष्टदर्शनानां स्वप्नजागरितवसतां (विषयाणां ?) प्रस्ताव इति ॥

## 2. संकरात् संकरेवासिनीमावहेच्छूर्पेणाक्षतान् गन्धान्त्सुमनसश्चात्र कृत्वा संविष्टः प्राक्शिराः शुचौ देशे शिरस्तः कृत्वा क इमम् उहुवे-(ग्राम. 5, 8. 190.1)त्येतद्गीत्वा वाग्यतः प्रस्वपेत् पश्यति ह ॥

सा - अथ स्वप्नविषयं प्रयोगमाह—संकरात् संकरे इति । संकरात् संमार्जनीतः सकाशात् संकरेवासिनीम् एतत्संज्ञां तदभिमानिनीं देवतां शूर्पेण

---

3. P. प्रदर्शनार्थे for दर्शनार्थ.

4. BlAB. om. second शब्दो.

5. Bl AB. om. हेत्वर्थः P. अतः यतोऽदृष्टदर्शनानि अर्थिनां प्रयोगा० ......for यतोऽदृष्ट० ; ABBl. ०धाने न तदवाप्तिः for ०धाने....

6. A. अदृष्टादृश्यभावात् । स्वप्नजागरितविषयम् । तदेव तथैव दृश्यन्ते ।, P. अदृष्टाः दृष्टिदृश्यभावात् स्वप्नजागरितविषयम् । देवता यैर्दृश्यन्ते, for अदृष्टाः...

8. RAl. अदृश्यंभावाः for अदृश्य०.

आवहेत् आवाहयेत् । सप्तम्यर्थे तृतीया । अत्र अस्मिन् देवतायुक्ते शूर्पे अक्षतादीन् कृत्वा तैस्तामभ्यर्च्य शुचौ देशे प्राक्शिराः संविष्टः शिरस्त कृत्वा स्वशिरोदेशे तं शूर्पं निधाय **एतत्** साम यथाशक्ति **गीत्वा वाग्यत प्रस्वपेत्** । एवं कृते भाविफलसूचकं स्वप्नं **पश्यति ह** खलु ॥

भ - स्वप्ने तावदाह—**संकरात् संकरे** इति । **संकरात्** संकरे मार्जन्या........**संकरवासिनीं** नाम देवतां **शूर्पेणा**वाहयेत् शूर्पं संहरेत् यत्र सावाहिता [तां] तस्मिन्निधाय । तस्मिन् शूर्पेऽक्षतान् गन्धान् पुष्पाणि च निक्षिप्य तच्छूर्पं **शिरस्तः कृत्वा** यथा शिरोदेशे भवति तथा [कृत्वा], **प्राक्शिराः शुचौ देशे संविष्टः** साम **गीत्वा वाग्यतः** स **प्रस्वपेत्** पश्यति स जिज्ञासितमर्थं यथावदिति ॥

## 3. गरगोलिकां वा समुद्गेऽवधायायाहि सुषमा हि त इत्येतद्गीत्वा वाग्यतः प्रस्वपेत् पश्यति ह ॥ २ ॥

सा - अथ तत्रैव प्रयोगान्तरमाह—**गरगोलिका**मिति । **गरगोलिकां** विषगोलिकां **समुद्गे** संपुटे **अवधाय** निधाय अक्षतादिभिरभ्यर्च्य शिरस्तः कृत्वा, प्राक्शिराः संविष्टः **आयाही**-(ग्राम. 5. 8. 191. 1)ति साम **गीत्वा वाग्यतः प्रस्वपेत्पश्यति** दिदृक्षितमिति ॥ २ ॥

भ - **गरगोलिका**मिति । **गरगोलिकां** विषगोलिकां **समुद्गे** संपुटे निधायाक्षतादिभिरभ्यर्च्य **शिरस्तः** कृत्वा प्राक्शिराः संविष्टः **आयाहीति** साम **गीत्वा वाग्यतः प्रस्वपेत् पश्यति** दिदृक्षितमिति ॥

---

3. BA. तस्मिन् for स्व.

4. Bl. इत्यर्थः for ह खलु ; AB. एव for खलु.

6. RAl. मार्जन्यां एकस्य अपरास्मित् सकवासिनी नाम देवतानां for मार्जन्या...संकरवासिनीं...*See* CN.

9. RAl. प्रसु(स्व Al.) पितः for प्रस्वपेत् ; RAl. जिज्ञातमित्यपथाव इति. for जिज्ञासितमर्थं...

12. B. om. वाग्यतः प्रस्वपेत् पश्यति ह and the corresponding commentary thereon.

13. AB om. अथ तत्रैव; Bl. अथ जाग्रत्प्रयोगविषयमाह for अथ...

4. कन्यां वोपवासयेददृष्टरजसमादर्शं चायमग्निः श्रेष्ठतम इत्येतेन । व्युष्टायाꣳ रात्रावेतेनैवाभिगीय परिमृज्य ब्रूयात् पश्येति । पश्यति ह ॥

सा - अथ जाग्रद्विषयं प्रयोगमाह—कन्यां वोपवासयेदिति । वाशब्दः प्रयोगान्तरद्योतनार्थः । कन्याम् अप्राप्तपुंयोगाम् अदृष्टरजसं रजोदर्शनरहिताम् आदर्शं च दर्पणं च अयमग्निर् (ग्राम 2. 6. 60. 1?)इत्येतेन अभिमन्त्र्य उपवासयेत् रात्रौ स्वसमीपे वासयेत् । व्युष्टायां रात्रौ प्रभाते जाते सति एतेनैव उक्तेनैव साम्ना (ग्राम. 2.6.60?-1.) कन्यां सहस्रकृत्व शतावरम् अभिगीय मुखं परिमृज्य आदर्शे पश्येति तां ब्रूयात् सा च पश्यति आदर्शे तां पृच्छेत् । यथार्थं ब्रूते ॥

भ - अथ जाग्रत्प्रयोगः । तत्र तावत् कन्यां वोपवासयेदिति । कन्यामप्राप्तपुंयो[गाम् अदृष्टरजस....]मादर्शं....[च अयमाग्निः श्रेष्ठ-]तम इत्येतेनोपवासनम् । व्युष्टायां रात्रावेतेनैव साम्ना अभिगीय कन्यां पश्यन् गीत्वा, परिमृज्य तस्या मुखम्, आदर्शं पश्येति ब्रूयात् पश्यति ह कन्या आदर्शे स्त्रियं वा पुरुषं वा । तं सा पृच्छेत् । स तत्त्वं ब्रूयात् ॥

5. उदशरावं वोपवासयेत् प्र मित्राय प्रार्यम्ण इत्येतेन व्युष्टायाꣳ रात्रावेतेनैवाभिगीय परिमृज्य ब्रूयात् पश्येति । पश्यति ह ॥

---

1. My T. दृष्ट for अदृष्ट.

4. A. जाग्रद्दर्शनप्रयोगविषयमाह for जग्रद् विषयं... ; Bl. om. विषयं.

6. Bl. om. दर्पणं च; अयमग्निः *See* CN.

7. Bl. om. उपवासयेत्... अभिगीय P. धारयेत् for वासयेत्.

9. P om. च.

10. P. सा च आदर्शे दृष्ट्वा यथार्थं ब्रूते; B. सा अदर्शनतां पृच्छेत् । स यथार्थं ब्रूते; B. अदर्शनतां पृच्छेत् । यथार्थं ब्रूते ॥ Bl. अदर्शितं पृच्छेत्, सा यथार्थं ब्रूते । for आदर्शे...

11. RAl. तेषु for तत्र.

17. P. प्रोक्ष्य for परिमृज्य.

सा - अथ तत्रैव प्रयोगान्तरम्—उदशरावमिति । पूर्ववद्योज्यम् । आदर्शस्थाने उदकशरावः अयमग्निरित्यस्य स्थाने प्र मित्राय प्रार्यम्ण (ग्राम. 7. 3. 255. 1) इत्यस्य प्रथमं सामेति विशेषः ॥

भ - उदशरावमिति । अथ आदर्शस्थाने उत्तराभावात् [उदशरावः]। स्पष्टमन्यदिति ॥

**6. वंशमय्यौ वा शलाके गन्धैः प्रलिप्य मध्यमेनोपवासयेद् व्युष्टायां रात्रावेतेनैवाभिगीय परिमृज्य ब्रह्मचारिणौ ब्रूयाद्धारयतमिति सन्नमत्योः सिद्धिं विद्यात् ॥**

सा - अथ वैदिकं लौकिकं वा कर्म चिकीर्षितं चेत्तत्सिद्धय-सिद्धिकारणप्रयोगमाह—**वंशमय्यौ** वेति । अथ वैदिके लौकिके वा कर्मणि **वंशमय्यौ** त्वक्सारनिर्मिते दृढे द्वे **शलाके** कृत्वा **गन्धैः** अगुरुचन्दनादिभिः **प्रलिप्य** उभौ ब्रह्मचारिणौ च रात्रौ **उपवासयेत्** । प्रमित्राय प्रार्यम्ण इत्यस्य **मध्यमेन** साम्ना (ग्राम. 7.3.255. 2) । ततो **व्युष्टायाम्** **एतेनैव** साम्ना **अभिगीय ब्रह्मचारिणौ** इमे शलाके **धारयतमिति ब्रूयात्** । ताभ्यां प्रयत्नपूर्वकं संनयद्भ्याम् अग्रतो धार्यमाणे शलाके यदि स्वयमेव मध्ये संनते स्यातां, तदा तयोः **संनमत्योः सिद्धिं विद्यात्** । भाविनः कर्मणः सिद्धिं जानीयात् । अत्र केचिच्छलाकयोरेवोपवासनं, ब्रह्मचारिणौ प्रातरानेतव्यावित्याहुः ॥

---

1. ABBl. om. अथ; BBl. om. पूर्ववद्योज्यम्.

2. P. उदकपूरितः शरावः for उदक०

3. A. साम शेषं पूर्ववत् ॥, BBl. सामेति शेषं पूर्ववद्योज्यम् for सामेति...

9. B. यदि कर्म चिकीर्षितं A, कर्म विहितं for कर्म चिकीर्षितं चेत्, B. तस्य सिद्धिर्विद्धिकारण० for तत्सिद्धि०.

10. P. adds परीक्षा after असिद्धि; A. अथ वैदिकं लौकिकं वा कर्मणी for अथ. . .; P om. अथ. . .कर्मणि.

11. Bl. om. दृढे द्वे शलाके कृत्वा.

12. P. after प्रलिप्य adds: मध्यमेन विशेषाश्रवणात् प्रमित्रायेत्यस्य मध्यमेन । ते शलाके; Bl. om. उभौ; PBl. om. प्रमित्राय. . .साम्ना ।

15. P. असंनमयद्भ्याम्, B. असंनयद्भ्यां for संनयद्भ्याम.

16. Bl. om. तदा.

भ - अथ चिकीर्षितस्य कर्मणः सिद्ध्यसिद्ध्योर्निर्णयकारणप्रयोगमाह—वंशमय्यौ वेति । त्वक्सारनिर्मिते शलाके गन्धैः प्रलिप्य प्रमित्राय प्रार्यम्ण (ग्राम. 7.3.255.2) इति मध्यमेन साम्ना ब्रह्मचारिणौ रात्रावुपवासयेत् । व्युष्टायां तेनैव साम्ना अभिगीय ब्रह्मचारिणौ ब्रूयात् इमे धारयतमिति । तयोर्धार्यमाणयोः संनमत्योः यदि ते शलाके अप्रयोर्धार्यमाणे मध्ये संनते तदा कर्मणः सिद्धिं जानीयात् ॥

## 7. यष्टिं वान्त्येन चतुरङ्गुलशो निमायोपवासयेत्। व्युष्टायाꣳ रात्रावेतेनैवाभिगीय परिमृज्य प्रमिणुयादङ्गुलिपर्वभिः पूर्यमाणेषु सिद्ध्यति ॥

सा - अथ तत्रैव प्रयोगान्तरमाह—यष्टिं वान्त्येनेति । यष्टिं वंशमयीं प्रमित्रायेत्यस्य अन्त्येन (ग्राम. 7.32.255.3) चतुरङ्गुलशः कृत्स्नां निमाय मात्वा गन्धैः प्रलिप्य रात्रौ स्वसमीपे धारयेत् । व्युष्टायां रात्रौ ताम् एतेनैवाभिगीय हस्तेन परिगृह्य अङ्गुलिपर्वभिः प्रमिणुयात् । अङ्गुलिपर्वसु पूर्यमाणेषु यावद्भिः अङ्गुलिपर्वभिः उपवासनकाले प्रमितं यष्टौ ततोऽधिकप्रमाणायां सत्यां स्वकार्यं सिद्ध्यति इति जानीयादित्यर्थः ॥

---

2. RAl. अतिसाराणि for त्वक्सारनिर्मिते; RAl. after शलाके add:—उदशरावोपवासयेत् प्रमित्राय प्रार्यम्ण इत्येतेन व्युष्टायां रात्रावेतेनैवाभिगीय परिमृज्य ब्रूयात् पश्येति ह व्याख्यातं दर्शेत्यक्तं अत्यादर्शन्वेष्टव्यमिति ।

8. P. प्रमृणुयाद् for प्रमिणुयाद्; A after प्रमिणुयादं has lost the text upto दधिमधुसुमनोजातरूपैः...See P. 182, l. 14 and the commentary upto पुरोहितः p 182. l. 4

10. P. before second यष्टिं adds:—वाशब्दः पूर्ववत् । Bl. adds: वान्त्ये after second यष्टिं.

11. P. चतुरङ्गुलशो निमीयोपवासयेत् । कृत्स्नां यष्टिं निमीय नितरां मात्वा; Bl. चतुरङ्गुलशः कृत्स्नं मिमाति तां गन्धैः...for चतुरङ्गुलशः कृत्स्नां...

12. BBl. om. रात्रौ....धारयेत्.

13. P. adds: एव after हस्तेन.

14. BBl. प्रमिता यष्टिः for प्रमितं यष्टौ.

भ - यष्टिं वान्त्येनेति । यष्टिं वा वंशमयीं प्रमित्राय प्रार्यम्ण इत्य[स्या]न्तेन साम्ना वा चतुरङ्गुलशः चतुरङ्गुलानि निमाय रात्रावुपवासयेत् । गन्धैः प्रलिप्य तस्यां व्युष्टायां रात्रावन्त्येनैवाभिगीय परिमृज्य अङ्गुलिपर्वभिः प्रमिणुयात् । चतुरङ्गुलिभिरित्यर्थः । अङ्गुलिपर्वसु पूर्यमाणेषु यावद्भिरङ्गुलिपर्वभिरुपवसनकाले प्रमितं ततोऽभ्यधिकप्रमाणायां यष्टावित्यर्थः । सिद्ध्यतीति विद्यादिति ॥

**8. आषाढ्यां पौर्णमास्यां बीजानि धारयित्वोपवासयेत् तुलां चेन्द्रमिद्देवतातय इत्येतेन । व्युष्टायाꣳ रात्रावेतेनैवाभिगीय परिमृज्य प्रोक्ष्य धारयेत् । यानि गरीयांसि तान्यृध्यन्ते ॥**

सा - अथ बीजावापकाले तेषां भाविमहाफलसिद्ध्युपायज्ञानमाह—आषाढ्यां पौर्णमास्यामिति । आषाढ्यां पौर्णमास्यां बीजानि यवव्रीह्यादीनि धारयित्वा तुलां च, चशब्दात् बीजानि च, उपवासयेत् । इन्द्रमिद्देवतातय (ग्राम.7.2.249.1) इत्येतेन साम्ना । व्युष्टायामित्यादि स्पष्टम् । पश्चात्तुलायां धारितानां व्रीह्यादीनां मध्ये यानि गरीयांसि गुरुतराणि भवन्ति तानि ऋध्यन्ते तस्मिन् संवत्सरे । तानि प्रवृद्धानि भविष्यन्तीति जानीयात् ॥

भ - अथ बीजावापकाले फलसिद्ध्यसिद्धिपरीक्षणम्—आषाढ्यां पौर्णमास्यामिति । बीजानि रात्रौ तुलायां धारयित्वा तां च तुलामुपवासयेत् । एतेन साम्ना । स्पष्टमितरदिति ॥

**9. अक्षतानां द्वौ राशी कुर्याद् भावाभावयोरा नो विश्वासु हव्यमित्येतेन । व्युष्टायाꣳ रात्रावेतेनैवाभिगीय प्रोक्ष्य ब्रूयादालभस्वेति । भावमालभमाने सिद्ध्यति ॥**

---

11. P. बीजावपन for बीजावाप; Bl. om. भावि; P. om. महा; BBl. om. ज्ञानम्.

14. B. तुला for तुलायां.

15. P. गुरुतमानि for गुरुतराणि.

19. RAl. अन्तने for एतेन.

सा - अथ कार्याणां फलसिद्धिभावाभावपरीक्षामाह—अक्षतानामिति । अक्षतानां भावाभावयोः भाविकार्यसद्भावासद्भावयोः निमित्तभूतौ द्वौ राशी कुर्याद् आ नो विश्वासु (ग्राम, 7.4.269.1-3) इति साम्ना। व्युष्टायां रात्रौ उक्तेनैव साम्ना अभिगीय राशी प्रोक्ष्य कन्यां ब्रह्मचारिणं वा आलभस्वेति ब्रूयात् ; तस्मिन्नालब्धरि भावमालभमाने सति कार्यं सिद्ध्यति इति विद्यात् । इतरथा वैपरीत्यं जानीयात् ॥

भ - अथ कार्याणां फलसिद्धिभावाभावपरीक्षा—अक्षतानामिति । स्पष्टार्थमन्यतरदिति ॥

**10.** ज्योतिष्मतां विधूमानामङ्गाराणां द्वौ राशी कुर्याद् । यावन्तो वा स्युस्तेनार्थिनः श्रुष्ट्यग्ने नवस्य म इत्येतेनैनान् युगपद् घृतेनाभिषिञ्चेत् । यः पूर्वः प्रज्वलितो विधूमेनार्चिषा प्रदक्षिणमभिपर्यावर्तते स जयतीति विद्यात् ॥

सा - अथ जयपराजयपरिज्ञानोपायमाह—ज्योतिष्मतामिति । ज्योतिष्मतां तेजोयुक्तानां विधूमानां धूमरहितानाम् अङ्गाराणां द्वयोरर्थिनोर्निमित्तभूतौ द्वौ राशी कुर्याद् । वा अथवा तेन क्रियमाणराशिना यावन्तोऽर्थिनः स्युः यावत्संख्याका जयकामिनो भवेयुः तावत्संख्याकान् राशीन् कृत्वा असावमुष्यासावमुष्य इति निर्दिशेत् । श्रुष्ट्यग्न (ग्राम. 3.11.166.3) इत्येतेन साम्ना एतान् अङ्गारराशीन् युगपद् घृतेनाभिषिञ्चेत् । तेषां मध्ये यस्य राशिः पूर्वं प्रज्वलितः सन्, विधूमेन धूमरहितेन तेजसा प्रदक्षिणमभिपर्यावर्तते स जयतीति विद्यात् ॥

भ - अथ संग्रामं युयुत्सतोर्विजया[प]जयपरीक्षा—ज्योतिष्मतामिति । द्वयोः युयुत्सतोर्ज्योतिष्मतां विधूमानामङ्गाराणां द्वौ राशी कुर्यात् असावमुष्यासावमुष्येति संकल्प्य । यावन्तो वा स्युस्तेनार्थिनः इति सर्वेषामपि

---

1. BBl. add एवं before फल.
2. BBl. om. भावि.
5. Bl. ०लब्धभावम् for लब्धरि भावम्.
14. BBl. om. द्वयोरर्थिनोर्निमित्तभूतौ.
23. R. षट्कानाम Al. शुङ्कूनाम for सर्वेषम्.

युयुत्सतां तन्त्रेणैव परीक्षां कारयति । **एतान्** अङ्गारराशीन् **एतेन** साम्ना युगपद् घृतेनाभिषिञ्चेत् । तेषु यः पूर्वः प्रज्वलितः विधूमज्वालायुक्तः स जयति इतरे जिता भवन्तीति स विद्यादिति ॥

**11. ज्योतिष्कान् कुर्यान्मानुषीणां घृतेन सद्योमथितेन प्र सोम देववीतय** (ग्राम. 14. 5.514. 1-5) **इत्येतेनैनान् ज्वलयेद् । यः पश्चाच्छाम्यति स चिरं जीवति स चिरं जीवति ॥ ३ ॥ ४ ॥**

सा - अथ चिरकालजीवनपरिज्ञानोपायमाह—**ज्योतिष्कानिति** । **ज्योतिष्कान्** अङ्गारराशीन् ज्योतिर्युक्तान् कुर्यात् । कथं तत्करणम् ? इति चेत्, तत्प्रकार उच्यते—**मानुषीणां घृतेन** योषितामाज्येन, तासां पय एकीकृत्य दधि कृत्वा तेन **सद्योमथितेन** सद्य एव मथितमुत्पन्नं नवनीतं घृतं कृत्वा तेन घृतेन **एनान्** अमुष्यायममुष्यायमिति निर्दिष्टान् अङ्गारराशीन् **युगपत् ज्वलयेत्** । तेषु यस्याङ्गारराशिः **पश्चाच्छाम्यति स चिरं जीवति** । यस्ततः-पूर्वं शाम्यति स ततो [ना]नुजीवति । एवं सर्वेषामपि जीवनपौर्वा-पर्यमवगन्तव्यम् ॥

द्विरुक्तिः खण्डसमाप्त्यर्था ॥ ३ ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे तृतीयाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

4. MyMSTSS BBl. ज्योतिष्मतां for ज्योतिष्कान्.

6. B. प्रज्वलयेत् for ज्वलयेत्; M. adds ह after शाम्यति.

8. BBl. add गृहवर्तिनां after अथ; P. om. काल.

9. B. ज्योतिष्मतामङ्गाराणां राशीन् for ज्योतिष्कान्...; B. अयमस्येतिवत् पूर्ववत् प्रकार इति गम्यते, Bl. कथम् । तत्करणप्रकार उच्यते । for कथं...उच्यते ।

11. Bl. तत् for तेन and om. सद्योमथितेन.

14. B. ततो न जीवति Bl. ततोऽनु० for ततो नानु...

16. BBl. om. द्विरुक्तिः...

भ - अथ बहूनां जीवनकालपरीक्षा । असौ चिरं जीविष्यत्यसौ पूर्वं मरिष्यतीति परी[क्षे]त्यर्थः । ज्योतिष्कान् इति । अङ्गारराशीन् ज्योतिष्कान् ज्योतिष्मतः कुर्यात् । कथं तत्क्रियते तथा दर्शयति मानुषीणामित्यादिना । मानुषीणां स्तन्यमातञ्चनेन दधि कृत्वा सद्योमथितेन घृतेन सद्योमथितं नवनीतं घृतं कृत्वा तेन घृतेन यावतामङ्गारराशीनाममुष्यासाविति संकल्प्य तान् ज्वलयेत् । तेषु क्रमेण शाम्यत्सु यः पश्चाच्छाम्येत् यस्याङ्गारराशिरित्यर्थः । स चिरं जीवति । शान्तिपौर्वापर्यात् मरणपौर्वापर्यं जानीयादित्यर्थः ॥

॥ चतुर्थोऽनुवाकः ॥

---

5. RAl. यावन्तान् (A!. पाचन्तान्) अङ्गारराशीनाममुष्यासाविति for यावताम्...

7. RAl. पर्यन्तं for पर्यं.

# पञ्चमः खण्डः

**1. राजानमभिषेचयेत् । तिष्येण श्रवणेन वा ॥**

सा - अथ पुरोहितकर्तव्यराज्याभिषेकप्रयोगमाह—**राजानमभिषेचये-दिति** । पुरोहितः **राजानमभिषेचयेत्** अभिषिञ्चेद्वक्ष्यमाणैः साधनैः । यद्यपि राजशब्दोऽभिषेकसंस्कृतक्षत्रियस्य वाचकः, तथापि भाविनीं संज्ञामाश्रित्य "यूपं तक्षति", "आहवनीयमादधाति" इत्यादिवत् अभिषेक्तव्यस्य राजानमित्युपचारप्रयोगः ॥

तस्य कालमाह—**तिष्येण श्रवणेन वा**, तिष्यः पुष्यः, तस्मिन् वा, श्रवणे वा अभिषेकः कार्यः ॥

भ - अथ राज्यप्राप्तस्य क्षत्रियस्य अभिषेकं पुरोहितस्य कृत्यमाह—**राजानमभिषेचयेदिति** । काले तिष्यश्रवणयुक्ते, काले न नक्षत्रमात्रमत्रोच्यते स्वयं छिनत्तीतिवत् । तिष्यश्रवणयोरन्यतरस्मिन्नक्षत्रे **राजानमभिषेचयेत्** अभिषिञ्चेत् पुरोहितः ॥

**2. व्रीहियवैस्तिलमाषैर्दधिमधुसुमनोजातरूपैर्यशस्विनीभ्यो नदीभ्यः समुद्राच्चोदकान्याहृत्यौदुम्बरे भद्रासने वैयाघ्रे चर्मण्युत्तरलोम्न्यासीनं जीवन्तीनां गवाꣳ शृङ्गकोशैरभिषिञ्चेदभ्रातृव्य इति रहस्येन ॥ १ ॥**

---

4. A. After the break at प्रमिणुयादं p. 177. l. 8 resumes the commentary from पुरोहितः vide n. 8. p. 177

5. P. संस्कृतस्य for संस्कृत०

6. P. अधिवसति for आदधाति; P. अभिषेक्तव्यं for अभिषेक्तव्यस्य.

9. A. श्रवणेन for श्रवणे.

11. RAl. युक्ताकालोत्रं त्वक्षणमात्रोच्यते स्वयं (R. न स्वयं) तिनत्ती (Al. धित्ति) तिवत् for तिष्यश्रवणयुक्ते. . .छिनत्तीतियत्.

14. A. after the break at प्रमिणुयादं p. 177. l, 8 eesumes the text from दधिमधु.

**सा** - अथ तत्साधनद्रव्यमाह—व्रीह्यादिजातरूपान्तैरष्टद्रव्यैर्मिश्रितै-रुदकैरभिषिञ्चेत् इत्युत्तरत्र संबन्धः । **यशस्विनीभ्यः** पावनत्वप्रयुक्तख्यातियु-क्ताभ्यो गङ्गातुङ्गभद्रादिभ्यो **नदीभ्यः समुद्राच्चोदकानि** पृथक्पृथगाहृत्य **औदुम्बरे** उदुम्बरसंबन्धिनि **भद्रासने** पादचतुष्टयोपेते सिंहासने ततः उपरि आस्तृते **वैयाघ्रे** व्याघ्रसंबन्धिनि **चर्मणि उत्तरलोम्नि** लोमप्रदेश उत्तरः उपरिभागो यस्य तादृशे **आसीनं जीवन्तीनां** जीवोपेतानां **गवां शृङ्गकोशैः** गवां शृङ्गाणि छित्वा निर्मितैः कोशैः पूर्वोक्तैर्जलैः परिपूरितैः **अभ्रातृव्य** (आ.गा.2.6.43.1) **इति रहस्येन** साम्ना **अभिषिञ्चेत्** । **उदकानि शृङ्गकोशै-**रित्युभयत्र बहुवचनश्रवणात् पृथक् पृथग् गङ्गाद्युदकैरभिषिञ्चेदित्यभिप्रायः ॥१॥

भ - कथमभिषिञ्चेत्तत्राह—**व्रीहियवैरिति** । व्रीहियवादिजातरूपपर्यन्तैः शृङ्गकोशेषु निक्षिप्तैः सार्द्धम् । यथा प्रवृद्धानां खुराणां छेदेन गवां न वेदना भवति तथा शृङ्गाणामपि । **जीवन्तीनां गवां शृङ्गाणि** प्रवृद्धान्याच्छिद्य तैः कोशान् कृत्वा तैर्निक्षिप्तोदकै**रभिषिञ्चेत्** । इत्थं प्राप्तराष्ट्रस्य नित्यमभिषेचनं युक्तम् ॥ १ ॥

## 3. यं कामयेतैकराजः स्यान्नास्य चक्रं प्रतिहन्येतेत्येकवृषेणाभिषिञ्चेत् ॥

---

1. P. ०द्रव्याणि for द्रव्यम्—and adds afterwards: व्रीहियवैरि-त्यादीनि ।; P. om. अष्ट.

2. P. पावमान, A पापापहत्व for पावनत्व.

3. P. आनीय for आहृत्य.

4. P. चतुष्पदोपेते for पादचतुष्टयोपेते; Bl. om. ततः.

6. ABBl. जीवन for जीव; AB om. गवां शृङ्गकोशैः; Bl. om. गवां

7. P. तन्निर्मितैः for निर्मितैः; A. कलशैः for कोशैः; Bl. om. कोशैः. P. om. परिपूरितैः.

11. RAl. छेदनगवानवेदन for छेदेन गवां न वेदना.

**सा** - अथ तत्रैव प्रयोगे कामनाभेदेन मन्त्रभेदमाह—**यं कामयेतेति** । **पुरोहितः यं राजानं एकराजः स्यात्** कृत्स्नस्य भूमण्डलस्य एक एव राजा भवेदिति ; **अथास्य चक्रं** मण्डलं **न प्रतिहन्येत** केनापि वैरिणा प्रतिहतं न भवेद् **इति कामयेत** तं राजानमभ्रातृव्य इति रहस्यस्थाने **एकवृषेण** (आ. गा. 2.6.41.1) साम्ना अभिषिञ्चेत् । शिष्टः प्रयोगः पूर्वोक्त एव ॥

**भ** - अथ राज्ञश्चक्रवर्तित्वं कामयमानः पुरोहितो मन्त्रविशेषेणाभिषिञ्चेदित्याह—**यं कामयेतेति** । एकवृषसाम्नाभ्रातृव्यरहस्यस्थाने स्यात् । अन्यत्सर्वं क्लृप्तमेव ॥

**4. अभिषेक्त्रे दद्याद् ग्रामवरं दासीशतꣳ सहस्रं तदधीनश्च भवेत् ॥ २ ॥**

**सा** - अथ पुरोहिताय प्रदेयं द्रव्यं तदधीनकरणतां चाह—**अभिषेक्त्र** इति । स्पष्टोऽर्थः ॥ २ ॥

**भ** - अथ राज्ञः पुरोहिते कृत्यमाह—**अभिषेक्त्रे** इति । तत्प्रेरित एव सर्वाणि कर्माणि कुर्वीतेति । स्पष्टमन्यदिति ॥ २ ॥

**5. अद्भुते यवद्रोणं जुहुयाद्वात आ वातु भेषजमित्येतेन शाम्यति ह ॥ ३ ॥**

**सा** - अथाद्भुतशान्तिमाह—**अद्भुते** इति । अद्भुतम् अभूतम् अक्लृप्तहेतुकमित्यर्थः । तस्मिन् सूर्यमण्डलच्छिद्रादावद्भुते

---

1. Bl. om. अथ; Bl. प्रयोगैः for प्रयोगे ; AB. मत for मन्त्र; Bl. om. ०भेद.

3. P. केनचिदपि for केनापि.

4. A adds: भवति after भवेत् ; P adds: इति after वृषेण.

5. P. om. शिष्टः, A विशिष्टः for शिष्टः.

7. Al. वृषामासी भ्रातृव्या० for वृष०.

11. PBl. करणं for करणतां; ABBl. om. च.

13. RAl. add इति before तत् ; Al. प्रोहितः for प्रेरितः.

18. A. पूर्वं भूतमक्लृप्त०, P. भूतपूर्वं न भवति for अभूतम् अक्लृप्तहेतुकम् ; A. अस्मिन् for तस्मिन् ; A. ०च्छिद्रादिवत् च्छिद्रादौ P. ०च्छिद्राद्युत्पन्ने for च्छिद्रादौ. . .

सति वात आ वातु भेषजम् (ग्राम. 5.7.184.1) इत्येतेन साम्ना यवद्रोणं जुहुयात् । एवंकृते अक्लृप्तहेतुकमद्भुतं शाम्यति ह । तदद्भुतजन्यदुरितमित्यर्थः ॥३ ॥

भ - अथाद्भुतोत्पत्तौ शान्तिमाह—अद्भुते इति । अद्भुतमभूतमलभ्यहेतुकमित्यर्थः । अद्भुते आदित्यच्छिद्रादावुत्पतिते एतत्प्रायश्चित्तं कुर्यात् । तेन तच्छाम्यति ॥ ३ ॥

## 6. कृष्णाँस्तिलानग्नौ जुहुयात् प्र दैवोदासो अग्निरित्येतेन । नैनं कृतानि हिँसन्ति । तान्येव प्रतिगच्छन्ति

सा - अथाभिचारशान्तिप्रयोगमाह—कृष्णानिति । आभिचारिकवृद्ध्यनुगुणं सहस्रकृत्वस्तदधिकं वा प्र दैवोदास (ग्राम. 2.5.51.1) इति साम्ना कृष्णान् तिलान् अग्नौ जुहुयात् । नैनं कृतानि हिंसन्ति परकृताभिचारादिप्रयुक्तानि कृत्यादीनि । किंतु तानि प्रयोक्तॄन् एव प्रतिगच्छन्ति ॥

---

1. BBl. om. साम्ना...अद्भुतं; P. after यवद्रोणं adds:— यवानां द्रोणपरिमाणसमाप्तिपर्यन्तं होमोचितपरिमाणेन विभज्य तावत्संख्यं.

2. P. तेनाद्भुतजनितपीडनं for एवं कृते...अद्भुतं; BBl. om. ह; P. नश्यत्येव for तदद्भुतजन्यदुरितमित्यर्थः ; A om. तदद्भुत० ; BBl. तदद्भुतमन्यद् वृत्तम् for तदद्भुतजन्यदुरितम्.

5. RAl. आदित्यच्छिकाद्यै (ह्रै Al.) for आदित्यच्छिद्रादौ.

10. A. कृतकाद्भुतस्य शान्तिमाह for अथाभिचार० B. om. अथाभिचार०...; A. उक्तप्रकारेण हुते कृताद्भुताः प्रयोक्तॄन् प्रति गच्छन्ति ॥ for आभिचारिक वृद्ध्यनुगुणं...प्रतिगच्छन्ति ॥; BlB. कृष्णांस्तिलानग्नौ जुहुयात् प्रदैवोदासो अग्निरिति साम्ना । for आभिचारिक...जुहुयात् ।

12. P. तानि कृतानि आभिचारिकाणि कर्माणि एनम् अभिचर्यमाणं पुरुषं न हिंसन्ति न पीडयन्ति । न केवलमभिचर्यमाणापीडनमेव for नैनं... कृत्यादीनि ।

13. P. तानेव for तानि; P. om. एव.

7. व्रीहियवानग्नौ जुहुयात् पञ्चनिधनेन वामदेव्येन (आ. गा. 2.7.53.1) । नैनं कृतानि हिंसन्ति । तान्येव प्रतिगच्छन्ति ॥

सा - अथ तत्रैव प्रयोगान्तरमाह—व्रीहियवानिति । स्पष्टोऽर्थः ॥

भ - अथ एतदुक्तानामभिचाराणां शान्तिकरान् प्रयोगानाह — कृष्णांस्तिलानित्यादिना अनुवाकशेषेण । त्रय एते प्रयोगाः । कृष्णतिलैर्होमः प्रथमः । व्रीहियवैर्विधेयो होमो द्वितीयः । मुद्रां संस्कृत्य तस्या धारणस्तृतीयः । नैनं कृतानि हिंसन्ति । प्रतिगच्छन्ति इति । कृतानि उत्पादितकृत्याप्रभृतीनि एनम् उद्दिश्य न हिंसन्ति । तान्येवेत्येतद् लिङ्गव्यत्ययः । तान्येव प्रयोक्तृन् [एव] प्रतिगच्छन्ति । अथवा तानीति कृतानि परामृश्यन्ते । स्वकृतानि स्वकृत्याप्रभृतीन्येव प्रतिगच्छन्ति कर्तृनुद्दिश्येति शेषः ।

8. ताम्ररजतजातरूपायसीं मुद्रां कारयित्वोच्चा० ते जातमन्धस इति चतुर्थेनाभिजुहुयात् सहस्रकृत्वः शतावरम् । तां मुद्रां दक्षिणेन पाणिना धारयेत् । नैनं कृतानि हिंसन्ति । तान्येव प्रतिगच्छन्ति । तान्येव प्रतिगच्छन्ति ॥ ४ ॥ ५ ॥

सा - अथ तत्रैव प्रयोगान्तरमाह—ताम्ररजतेति । ताम्रादिचतुर्लोहमयीं 5 मुद्राम् अङ्गुलीयकं कारयित्वा उच्चा ते जातमन्धस (ग्राम.12.1.467.4)

1. My AB. ०निधनं for निधनेन.

7. RAl. व्रीहियवास्त (R. स्तं) व्रीहियवान् से (स्त Ai.) स्वैर्होमो विधेयो द्वितीयः for व्रीहियवैः...द्वितीयः...

8. RAl. एकम् for एनम्.

10. RAi. प्रकृतीन् (R. त्तीन्) for प्रयोक्तॄन्.

11. RAl. कत्त (R तृ) द्दमिति for कर्तृनुद्दिश्येति.

18. P. लोहचतुष्टयमयीं for चतुर०

इति अस्याः चतुर्थेन साम्ना सहस्रकृत्वः शतावरम् आज्येन हुत्वा संपातेन मुद्रायाम् अभिजुहुयात् । शिष्टं स्पष्टप्रायमिति ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये
तृतीये ब्राह्मणे तृतीयाध्याये पञ्चमः खण्डः ॥ ५ ॥

भ - ताम्ररजतेति । ताम्रं शुल्बं, रजतं रूप्यं ; जातरूपं सुवर्णम्, अयः कृष्णायसं तेषां समाहारः ताम्ररजतजातरूपायः, तद्विकारात्मिकां मुद्राम् अङ्गुलीयकं कारयित्वा पात्रे निधाय समीपे निक्षिप्य हुतशेषं संपातैरभिजुहुयात् । निगदसिद्धमितरदिति ॥

॥ पञ्चमोऽनुवाकः ॥

---

1. P. अस्यां for अस्याः ; ABBl. संपात for संपातेन.

3. AB om. the colophon and have at the and A. पञ्चमः खण्डः and B. तृतीये पञ्चमः. खण्डः.

5. R. शुचं, Al श्रुचं for शुल्वं.

## षष्ठः खण्डः

**1. संग्रामं युयुत्समानस्योदकमभिजुहुयात् सोमꣳ राजानं वरुणमित्येतेन। तत एनं पाययेद्यो राजा चर्षणीनामिति पूर्वेण । ये चात्र मुख्याः स्युस्तानुत्तरेणाभिषिञ्चेत् ॥**

**सा** - अथ युद्धजयार्थिनो राज्ञः प्रयोगमाह—**संग्राम**मिति । **संग्रामं युयुत्समानस्य** योद्धुमिच्छतो राज्ञो जयार्थं पुरोहितः आज्यतन्त्रेण महाव्याहृतिपर्यन्तं हुत्वा **सोमं राजानं वरुणम्** (ग्राम. 3.10.91.1) इत्येतेन साम्ना, आज्येन सहस्रकृत्वः शतावरं हुत्वा, संपातेन **उदकमभिजुहुयात्** । ततः अभिहुतमुदकं **यो राजा चर्षणीनाम्** (ग्राम. 7.5.273.1) इति अस्याः **पूर्वेण** साम्ना **एनं पाययेत्** । **अत्र** योद्धॄणां मध्ये **ये च मुख्याः स्युः** प्रधानपुरुषाः सेनापतयः स्युः **तान् यो राजेति** अस्या **उत्तरेण** साम्ना (ग्राम. 7.5.273.2) अभिहुतेनैवोदकेन **अभिषिञ्चेत्** ।

**भ** - अथ योद्धुकाम[स्य] राज्ञो जयहेतुप्रयोगमाह—**संग्रामं युयुत्समानस्ये**त्यादिना जयति न पराजीयत इत्यन्तेन । **संग्रामं** युद्धं **युयुत्समानस्य** चिकीर्षत इत्यर्थः । **सोमं राजानमिति** साम्ना अग्नौ **सहस्रकृत्वः** शतावरं हुत्वा संपातेनो**दकमभिजुहुयात्** । होमान्ते राजानं तदुदकं **पाययेत् यो राजेति पूर्वेण** । अत्र योधेषु **ये मुख्याः स्युस्तान्**त्तरेण यो राजेति द्वितीयेनाभिषिञ्चेत् ॥

---

3. My A. om. वरुणं.
5. AB. add जेतुं after second संग्रामं.
7. B. कृत्वा for हुत्वा.
9. P. अस्यां for अस्याः.
10. Bl. योद्धारः for च.
11. P. अस्यां AB अस्य for अस्याः.

**2. अथ हैनꣳ संनाहयेत् प्र सेनानीरिति वर्गेण ॥**

सा - अथ संनाहमन्त्रमाह—अथ हैनमिति । अथ उदकपानानन्तरम् एनं राजानं प्र सेनानीः शूर (ग्राम. 15.7.533. 1-3) इति वर्गेण कवचादिभिः साधनैः संनाहयेत् युद्धसंनद्धं कुर्यात् पुरोहितः ॥

भ - अथ हैनमिति । अथ राजानं संनाहयेत् कवचेन युञ्जीत प्र सेनानीरिति वर्गेण ॥

**3. अथास्य रथं युञ्ज्यादा त्वा सहस्रमा शतमिति वर्गेण ॥**

सा - अथ रथयोजनस्य मन्त्रमाह—अथास्य रथमिति । अथ संनहनानन्तरम् अस्य राज्ञः रथम् आ त्वा सहस्रम् (ग्राम. 6.2. 245. 1-4) इति वर्गेण युञ्ज्यात् अश्वादिभिः साधनैर्योजयेत् पुरोहितः ॥

**4. बृहद्-**(आ. गा. 1.2.14.1) **रथन्तराभ्यां** (आ. गा. 2.6. 49. 1) **चक्रे वामदेव्येनाधिष्ठानम् ॥**

सा - अथ चक्रयोरधिष्ठानस्य चाभिमर्शनमन्त्रमाह—बृहद्रथन्तराभ्यामिति । स्पष्टम् ॥

भ - [बृहद्रथन्तराभ्याम् इति] चक्रयोरधिष्ठानस्य रथोपस्थस्य चाभिमर्शनम् ।

**5. स घा तं वृषणꣳ रथम्**(ग्राम. 11 .8. 424. 1) **इत्येतेनाधितिष्ठेत् । प्रयान्तं चैनमनुगायेदिन्द्रस्य नु वीर्याणि**(आ. गा. 4. 4, 121. 1)**इति ॥**

सा - अथ राज्ञो रथारोहणम् , आरुह्य गच्छतोऽनुगानं चाह—स घा तमिति । स्पष्टोऽर्थः ॥

भ - अधितिष्ठेद्राजा ॥

---

1. Bl. adds: हा after अथ.
2. A. साधन, B संनहन for संनाह.
5. Al. प्रयुञ्जीत for युञ्जीत.
9. P. प्रयोगम् for मन्त्रम्.
13. वामदेव्योन *See* CN.
19. TABl. add आदि after इति.

**6. आजिशीर्षं गत्वा त्रीनिषूनस्येदुत्वा मन्दन्तु सोमा** (ग्राम. 5. 9. 194. 1) **इत्येतेन । जयति न पराजीयते ॥**

सा - अथ संग्रामान्तिकं प्राप्तवता आदौ समन्त्रकमिषुत्रयं क्षेपणीयमित्याह—**आजिशीर्ष**मिति । **आजिशीर्षं** संग्रामशिरः प्रदेशं **गत्वा** । शिष्टं स्पष्टम् । एतेन स राजा संग्रामं जयत्येव न कदाचिदपि शत्रुभिः **पराजीयते** ॥

भ - आजिशीर्षमिति ॥ इषूनस्येद्राजैव । स्पष्ट[मि]तरदिति ॥

**7. संदर्शने धूम्रायाः गोः सरूपवत्साया घृतद्रोणं जुहुयात् सत्यमित्थेति रहस्येन । जयति न पराजीयते ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—**संदर्शने** इति । **संदर्शने,** यत्र युद्धार्थिनी परसेना संदृश्यते तत् स्थानं संदर्शनम् । तत्रोक्तलक्षणायाः गोः संभृतं घृतं द्रोणपरिमाणपरिमितं सत्यमित्थे-(आ गा. 4.4.122.1)त्यनेन रहस्येन **जुहुयात्** । शिष्टमुक्तम् ॥

भ - अथ प्रयोगान्तरं गतार्थम् । **संदर्शने** इति । ........धूम्रायाः सरूपवत्सायाः घृतद्रोणं [सं]दर्शने यत्र सेना संदृश्यते तस्मि[न् जुहुयात् ] ॥

**8. बाधकमयीनाँ समिधां घृताक्तानाँ सहस्रं जुहुयादभि त्वा पूर्वपीतय** (ग्राम. 7.3.256.1) **इति । वषट्कारं चास्य निधनं कुर्यात् । जयति न पराजीयते ॥**

---

1. TABBl. om. आजि ; TB. गीत्वा for गत्वा.
3. P. प्राप्तवन्तः A. प्राप्तवतः for प्राप्तवता ; A. समन्त्रक इषुः क्षेपणीयः for समन्त्रकम्...
4. ABBl. om. आजि.
5. A. साम्ना for सः ; BBl. adds गत्वा after संग्रामं ; P. om. एव.
6. इषून् *See* CN.
9. P. om. second संदर्शने.
10. ABBl. दृश्यते for संदृश्यते ; ABBl. तत्र for तत् and om. स्थानं.
11. P. संभूतं for संभृतं.
13. RAl. प्रयोगान्तरयथार्थम् for प्रयोगान्तरं गतार्थम् ; [सं] दर्शने *See* CN.

सा - अथ तत्रैव प्रयोगान्तरमाह—बाधकमयीनामिति बाधको राजवृक्षः । शिष्टमुक्तप्रायम् ॥

**9.** सैध्रकमयीनाᳬ समिधां घृताक्तानाᳬ सहस्रं जुहुयादभि त्यं मेषमितीन्द्र इव दस्यूᳬ प्रमृण इति चास्य निधनं कुर्यात् । जयति न पराजीयते ॥ १ ॥

सा - अथ प्रयोगान्तरम्—सैध्रकमयीनामिति । सैध्रकं महासारवृक्षविशेषः । अभि त्यम् (ग्राम. 10.3.376.1) इत्यस्य अन्ते इन्द्र इव दस्यूᳬ प्रमृण इति निधनम् । शिष्टमुक्तम् ॥ १ ॥

भ - क्षुद्रको नाम तिमिशविशेषो रथवृक्ष इति प्रसिद्ध इति ॥

**10.** सप्तरात्रोपोषितः सप्तमुख्यानुद्दिश्य सद्यः–पीडितेन सर्षपतैलेन सप्तहेनाहुतिसहस्रं जुहुयात् । सप्तरात्रान्न भवन्ति ॥

सा - अथ मुख्यसप्तपुरुषवधकामस्य प्रयोगमाह—सप्तरात्रोपोषित इति । सप्तरात्रमुपोषितः सप्तराजादिमुख्यान् पुरुषानुद्दिश्य तेषां नामानि निर्दिश्यन्ते । म्रियन्तामित्युक्त्वेत्यर्थः । सप्तपुरुषान् हन्तीति सप्तहं तेन साम्ना (आ. गा. 2.6.50.1) आहुतिसहस्रं जुहुयात् । तथाकृते तावत्कालजीविनो न भवन्ति इत्यर्थः ॥

---

3. सैध्रक *See.* CN.

6. A. त्व [ कु ] सारवृक्षविशेषः; B.—श्चारवृक्षविशेषः for महासार०

9. क्षुद्रकः *See* CN.

13. ABl. प्रयोगः for प्रयोगमाह.

14. P. om. सप्तरात्रमुपोषितः...हन्तीति; BBl. नाम for नामानि.

15. BBl. निर्दिश्यतो for निर्दिश्यन्ते; Bl. ०पुरुषा भवन्तीति for ०पुरुषान्...P. सप्तहेन for सप्तहं तेन.

16. Bl. adds सप्तरात्रः before तावत्; P. तावत्कालं जीवन्तः for तावत्काल०:

भ - अथ सप्तपुरुषान्निनाशयिषोः प्रयोगमाह—**सप्तरात्रोपोषित** इति । सप्तपुरुषान् हन्तीति सप्तहं तेन साम्ना आहुतिसहस्रं **जुहुयात्** । सप्तपुरुषानुद्दिश्येति तेषां नामादीनुद्दिश्य एते म्रियन्तामिति मनसा ध्यायन्नित्यर्थः । स्पष्टमन्यदिति ॥

**11. हस्त्यश्वरथपदातीनां पिष्टमयीः प्रतिकृतीः कृत्वा पिष्टस्वेदꣳस्वेदयित्वा सर्षपतैलेनाभ्यज्य तासां क्षुरेणाङ्गान्यवदायाग्नौ जुहुयादभि त्वा शूर नोनुम इति रहस्येन यत्र हीशब्दः । यावतां जुहोति सर्वे न भवन्ति ॥ २ ॥**

सा - अथ शत्रोः सचतुरङ्गबलस्याभिचारप्रयोगमाह—**हस्त्यश्वरथे**ति । हस्त्यादीनां चतुरङ्गबलानां मध्ये यावतां प्रतिकृतीः कर्तुं शक्नोति, तावतीः **पिष्टमयीः प्रतिकृतीः कृत्वा तासां** मध्ये एकैकामसावमुष्य प्रतिकृतिरसावमुष्येति निर्दिश्य **पिष्टस्वेदं** येन पाकेन पिष्टं स्विद्यते, तथा **स्वेदयित्वा,** ताः प्रत्येकं **सर्षपतैलेनाभ्यज्य तासाम् अङ्गानि** मुख्यानि हस्तपादादीनि **क्षुरेणावदाय** खण्डयित्वा **अभि त्वेति रहस्येनाग्नौ** (आ. गा. 5.5.129.1) **जुहुयात्** । **यत्र हीशब्दः** तादृशेन अभित्वेत्यनेन आहुतिसहस्रं जुहुयात् । एवं कृते **यावतां** हस्त्यादीनां प्रतिकृतीः **जुहोति** ते **सर्वे न भवन्ति** नश्यन्तीत्यर्थः ॥ २ ॥

---

1. पुरुषान् *See* CN.
2. RAl. सप्तहेन सन्ता for सप्तहं तेन साम्ना.
5. A. Breaks after हस्त्यश्व and again resumes from पूर्वं मनसानुद्रुत्यान्ते. The text and commentary in between is lost in this Ms.
8. My MB. हि for ही.
9. P. चतुरङ्गसैन्यवधकामस्य for शत्रोः. . .सचुतुरङ्गबलस्य.
10. vide n. 5; BBl. बलाद्दीनां for बलानां.
11. B. प्रतिकृतिं for प्रतिकृतीः; Bl. एकैका सामुष्य for एकैकामसावमुष्य.
12. Bl. सामुष्य for असावमुष्य; Bl. om. पिष्टं.
14. Bl. om. खण्डयित्वा.
15. Bl. om. तादृशेन.
16. Bl. ०कृतिं. for कृतीः.
17. P. om. नश्यन्तीत्यर्थः.

**भ** - अथ शत्रोश्वतुरङ्गबलस्याभिचारे प्रयोगमाह—**हस्त्यश्वरथेति** । यावतां हस्त्यादीनां पूरिकादीनां(?) प्रतिकृतीः कर्तुं शक्नोति तावतां **पिष्टमयीः प्रतिकृतीः कृत्वा** ताः **पिष्टस्वेदं स्वेदयित्वा** [यथा पिष्टस्य] स्वेदेन पाकः क्रियते कुम्भ्यादौ तथा पक्त्वेत्यर्थः । अमुष्येयं प्रतिकृतिरिति संस्पृश्य पश्चात् स्वेदः कर्तव्यः । [ताः]उद्धृत्य **सर्षतैलेनाभ्यज्य तासामङ्गानि** प्रधानानि, हस्तौ पादौ शिरो मध्यदेह इत्येतानि, **क्षुरेणावदाय अभि त्वेति रहस्येन यत्र** रहस्ये **हीशब्दो** भवति....एतेनाहुतिसहस्रं **जुहुयात्** । **यावतां** हस्त्यादीनां प्रतिकृतीर्**जुहोति ते सर्वे न भवन्ति** इति ॥

**12. त्रिरात्रोपोषितः कृष्णचतुर्दश्याᳫं शवादङ्गारमाहृत्य चतुष्पथे बाधकमिध्ममुपसमाधाय वैभीतकेन स्रुवेण सर्षपतैलेनाहुतिसहस्रं जुहुयात् संमील्येन यत्र वृश्चशब्दः स्यात्** (आ. गा. 2. 7. 51. 6) **। तत्र पुरुषः शूलहस्त उत्तिष्ठति। तं ब्रूयादमुं जहीति । हन्त्येनम् ॥**

सा - अथैकपुरुषाभिचारप्रयोगमाह--त्रिरात्रोपोषित इति । त्रिरात्रोपोषित इत्यादि स्पष्टम् । संमील्येन यत्र वृश्चशब्दः स्यात् इति । पविमन्ति पञ्च महासामानि संमील्यानि । तेषु यत्र वृश्चशब्दः स्यात् "क्षुरो हरो हरो हरः (त्रिः) वृश्चप्रवृश्च इति । अनेन आहुतिसहस्रं जुहुयात् । होमान्ते तत्र एव होमस्थाने शूलहस्तः कश्चित् पुरुषः उत्तिष्ठति । तं समुत्थितं पुरुषं अमुं जहीति ब्रूयात् । स एवमुक्तः पुरुषः एनं वैरिणं हन्ति ॥

---

3. स्वेदयित्वा *See* CN; RAl. स्वेदन for स्वेदेन.

4. पश्चात् RAl. *See* CN.

6. RAl. इति तानि for इत्येतानि; अभि त्वेति *See* CN.

8. RAl. ते (Al. ति) मधे (Al. धें) for ते सर्वे.

14. BBl. एकस्य for एकपुरुष०

भ - अथैकस्य पुरुषस्याभिचारे प्रयोगमाह—त्रिरात्रोपोषित इति । संमील्येन यत्र वृक्षशब्दः स्यादिति । पविमन्ति पञ्च महासामानि संमील्यानि । तेषु यत्र वृक्षशब्दः स्यात् 'क्षुरो हरो हरो हरः वृक्षप्रवृक्षेत्येतेनाहुतिसहस्रं जुहुयात् । हुतेऽग्नौ शूलहस्तः पुरुष उत्तिष्ठति तं ब्रूयात् अमुं जहीति शत्रोर्नाम निर्दिश्य । स पुरुषः एनं शत्रुं हन्ति । स्पष्टमन्यतरादिति ॥

**13. आमगर्भस्य वा क्षुरेणाङ्गान्यवदायाग्नौ जुहुयात् कक्षवर्गाद्यैश्चतुर्भिः सपत्नं मनसा ध्यायन्त्सद्यो न भवति सद्यो न भवति ॥ ३ ॥ ६ ॥**

सा - अथ तत्रैव प्रयोगान्तरमाह—आमगर्भस्येति । आमगर्भस्य आमः अपक्वः गर्भः उदरप्रदेशो यस्याः वैरिप्रतिनिधेः स आमगर्भः, तस्य, पूर्वोक्तपिष्टस्वेदे कृते पिष्टप्रतिकृतेरुदरप्रदेशो यथा न पक्वो भवति तथा स्वेदितायाः प्रतिकृतेरित्यर्थः । वाशब्दः पूर्वप्रयोगेण सह विकल्पार्थः । तस्य अङ्गानि क्षुरेणावदाय अग्नौ जुहुयात् । कक्षवर्गाद्यैः—इत्यादि स्पष्टम् ॥ ३ ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे तृतीयाध्याये षष्ठः खण्डः ॥ ६ ॥

भ - अथाभिसंचरतां प्रयोगान्तरं सुकरमाह—आमगर्भस्य वेत्यनुवाकशेषेण । आमगर्भस्य [अ]पक्वगर्भस्येत्यत्र लिङ्गव्यत्ययः अपक्वगर्भाया वा शत्रोः प्रतिकृतेः यथा गर्भोऽन्तर्भागो न पक्वो भवति । तस्याः स्विन्नाया इत्यर्थः । निगदसिद्धमन्यदिति ॥

॥ षष्ठोऽनुवाकः ॥

---

1. RAl. व्यभिचारे for अभिचारे; R. प्रयोगान्तरम् for प्रयोगम.
2. पविमन्ति *See* CN.
5. RAl. add: शति (Al. शंति) after जहीति.
11. P. om. यस्याः...उदरप्रदेशः.
16. B. om. सायणाचार्य....प्रकाशे.
20. RAl. गर्भाधांन्तर्भागः for गर्भोऽन्तर्भागः

## सप्तमः खण्डः

1. अथ यः कामयेतामुह्यन्त्सर्वाण्या जनित्राणि परिक्रामेयमिति महे नो अद्य बोधयेत्येतत् सदा प्रयुञ्जीतान्तवेलायां चैतत् स्मरेदमुह्यन्त्सर्वाण्या जनित्राणि परिक्रामति ॥ १ ॥

सा - अथ भाविजन्मसु अज्ञानाभावकामिनां प्रयोगमाह—अथ य इति । अथशब्दोऽधिकारे । यः पुमान् कामयेत । किमिति? अमुह्यन् मोहमज्ञानमप्राप्नुवन् जन्मकर्माणि सर्वाणि कर्मप्राप्तानि नृगवादीनि जन्मानि आ सर्वतः परिक्रामेयम् इति स 'महे नो अद्य बोधय'' (ग्राम. 11.8.421.1.) इत्येतत्साम सदा प्रयुञ्जीत । अन्तवेलायां प्राणनिर्याणकालेऽपि एतदुक्तं साम स्मरेत् । एवं कृते सति अमुह्यन् सर्वाणि जनित्राणि आ परिक्रामति ॥ १ ॥

भ - अथ यः कामयेत सर्वेषु जन्मसु भाविषु मे मोहो न स्यादिति तस्य मोहाभावहेतुं प्रयोगमाह—आ जनित्रमा जननं जन्मेत्यर्थः । सुगममन्यदिति ॥ १ ॥

2. अथ यः कामयेत सर्वत्राग्निर्मे ज्वलेदिति संवत्सरꣳ शिरसाग्निं धारयेदग्न आ याहि वीतय इति

---

6. BBl. कामिनः for कामिनां.

8. P. सर्वाणि जनित्राणि सर्वकर्मप्राप्याणि भावीनि नृगवादिजन्मानि for जन्मकर्माणि...जन्मानि.

9. P om. स महे...परिक्रामति.

12. RAl. भवेषु for भाविषु.

16. My धारयन् for धारयेत्.

**प्रथमेनो-(ग्राम. 1.1.1.1)पतिष्ठेद्; द्वितीयेन (ग्राम. 1. 1. 1.2) परिहरेत्; तृतीयेन (ग्राम. 1. 1. 1. 3) परिचरेत् । सर्वत्र हास्य ज्वलति यदिच्छति तद्दहति ॥ २ ॥**

सा - अथाग्नेः स्वाधीनप्रयोगमाह — **अथ यः कामयेते**ति । उक्तकामोपेतो यः पुमान् स कस्मिंश्चित्पात्रे **अग्निं** निधाय नित्यकर्माविरोधेन संवत्सरपर्यन्तं **शिरसा धारयेत्** । **अग्न आयाहीति** अस्याः **प्रथमेन** साम्ना प्रतिदिनम**ग्निमुपतिष्ठेत्** । तस्याः **द्वितीयेन** साम्ना **परिहरेत्** आत्मानं परितः प्रदक्षिणं हरेत् । **तृतीयेन परिचरेत्** नित्यहोमद्रव्याणामन्यतमेन जुहुयात् । एवं संवत्सरे पूर्णे **अस्य** प्रसन्नोऽग्निः सर्वत्र अपेक्षितदेशेषु **ज्वलति** । न केवलं तावन्मात्रं, किंतु साधको **यद्** दग्धु**मिच्छति तत्** तस्येच्छामात्रेण **दहति** ॥ २ ॥

म - अथ [अग्नेः स्वाधीनप्रयोगमाह]—**अथ यः कामयेत सर्वत्राग्निर्मे ज्वले**दित्यादिना **ज्वलती**त्यन्तेन । **अग्निं** पात्रे कस्मिंश्चिन्निधाय दीप्तं **शिरसा संवत्सरं धारयेत्** नित्यकर्मानुष्ठानव्यतिरिक्तकालेषु । अथ **प्रथमेन** साम्ना **अग्निमुपतिष्ठेत्** प्रतिदिनम् । **द्वितीयेन परिहरेत्** आत्मानं परितः प्रदक्षिणं हरेत् । **तृतीयेन परिचेरत्** जुहुयान्नित्यहोमद्रव्याणामन्यतमेन । एवं संवत्सरं कृते **सर्वत्रास्याग्निर्ज्वलती**ति । एवं साधिताग्नेः अन्यत् फलं भवतीत्याह— **यदिच्छति तद्दहति** [इति] । क्षे[पणं] विनास्येच्छामात्रेण **यदिच्छति** **तद्दहत्य**ग्निरिति ॥

**3. अथ यः कामयेत पिशाचान् गुणीभूतान् पश्येयमिति संवत्सरं चतुर्थे काले भुञ्जानः कपालेन भैक्षं चरन् प्राणाः शिशुर् (ग्राम. 17. 10. 570. 5) इत्यन्त्यँ सदा सहस्रकृत्वः आवर्तयन् पश्यति ॥**

---

3. T ज्वलयति for ज्वलति.

6. Bl. adds: अग्निं after शिरसा; B. अस्यां for अस्याः.

7. P om. अग्निम्.

10. BBl. स्वेच्छा for तस्येच्छा.

14. RAl. add: उदतिष्ठेत् after उपतिष्ठेत्; RAl. add: परिहारेन after द्वितीयेन.

21. TSS. ०अन्तं for ०अन्त्यं.

सा - अथ पिशाचानां स्वाधीनदर्शनप्रयोगमाह—**अथ यः कामयेते**ति। पिशाचान् गुणीभूतान् स्वाधीनान् पश्येयमिति यः कामयेत, संवत्सरपर्यन्तं **चतुर्थे काले** एकमहरुपोष्य द्वितीयेऽहनि रात्रौ भोजनमित्येवं नियमेन **भुञ्जानः** उक्तेऽपि काले **कपालेन** घटैकदेशेन **भैक्षं चरन्**, उक्तं साम प्रतिदिनं **सहस्रकृत्वः आवर्तयन्** तान् पिशाचान् **पश्यति** ॥

भ - अथ पिशाचानां वश्यत्वार्थप्रयोगः—**अथ यः कामयेत पिशाचा**-निल्यादिना पश्यतीत्यन्तेन। **कपालेन** भिन्नघटाद्येकदेशेन **सदा दिने दिने सहस्रकृत्वः आवर्तयन्** अयाचितमप्रार्थितमेव संवत्सरान्ते **पश्यति पिशाचान**भीष्टकारिण इति ॥

## 4. अयाचितमेतेन कल्पेन द्वितीयं प्रयुञ्जानः पितॄन् पश्यति ॥

सा - अथ पितृदर्शनार्थं प्रयोगमाह—**एतेन कल्पेन** इत्यतिदेशात् संवत्सरव्रतनियमश्चतुर्थकालभोजनं साम्नः सहस्रकृत्व आवृत्तिश्चेत्येतदत्र प्राप्नोति। अयाचितस्य पुनर्विधानेन कपालेन भैक्षचरणप्रयासो नोपगच्छति। शिष्टं स्पष्टम् ॥

भ - **एतेन कल्पेने**ति एतेन कल्पेन **द्वितीयं** साम प्राणाः शिशुर् (ग्राम. 17. 10. 570. 2) इति **प्रयुञ्जानः पितॄन्** पितृदेवान् **पश्यति**। **अयाचित**मित्यनुषङ्ग इति ॥

---

1. P om. दर्शन.
3. BBl. परे for द्वितीये.
4. P. उक्तकाले for उक्तेऽपि काले; BBl. सदैक० for घटैक०.
7. RAl. पश्य (R. पश्यं) त्वर्थ for पश्यतीत्यन्तेन.
8. RAl. आयाचितर for अयाचित.
12. P. ०देशेन for ०देशात्.
13. Bl. om. साम्नः
14. P. कपाले for कपालेन; P. चरणादि for चरण; B. ०नियमः, Bl. ०नियमं for ०प्रयासः

**5.** संवत्सरमष्टमे काले भुञ्जानः पाणिभ्यां पात्रार्थं कुर्वाणो वृत्रस्य त्वा श्वसथादीषमाणाः (ग्राम. 8.10.324. 1-2) इत्येतयोः पूर्वं॰ सदा सहस्रकृत्व आवर्तयन् गन्धर्वाप्सरसः पश्यति ॥

सा - अथ गन्धर्वाप्सरसां दर्शनार्थप्रयोगमाह—संवत्सरमिति । स्पष्टोऽर्थः ॥

भ - संवत्सरमष्टमे काले भुञ्जान इत्यादि गन्धर्वाप्सरसः पश्यत्ययाचितमित्यन्तं सिद्धप्रायमिति ॥

**6.** अयाचितमेतेन कल्पेन द्वितीयं प्रयुञ्जानो देवान् पश्यति ॥ ३ ॥

सा - अथेन्द्रादिदर्शनार्थप्रयोगमाह—अयाचितमिति । एतेन कल्पेन इत्यतिदेशेन अयाचितमिति नियमप्रत्याम्नानात् पाणिभ्यां पात्रार्थमित्येतद्व्यतिरिक्तं नियमजातं प्रवर्तते । अष्टमकालस्य तु अयाचितेनाविरोधात् अनुवृत्तिः । द्वितीयं वृत्रस्य त्वा इत्येतस्य द्वितीयम् (ग्राम.8.10.324.2)॥ ३ ॥

भ - एतेनैव कल्पेन वृत्रस्य त्वेति द्वितीयं प्रयुञ्जानः देवान् पश्यति अयाचितमिति ॥

**7.** यद्वर्च इति दिशांव्रतं दशानुगानमेतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जीत । निधयोऽस्य प्रकाशन्ते ये दैवास्तांस्तेन ॥

---

4. RAl. भरतस्वामिन् completes the paragraph with अयाचितम् of the following and begins the following paragraph with एतेन कल्पेन.

5. Bl. om. अर्थ.

12. B. अनियम० for नियम;० Bl. नियमात् for नियमप्रत्याम्नात्.

13. Bl. अनिवृत्तिः for अनुवृत्तिः.

18. PB. प्रयुञ्जानः for प्रयुञ्जीत; My TMV. om. प्रयुञ्जीत । निधयोऽस्य...दैवास्तांस्तेन ॥

19. P. देवाः for दैवाः.

सा - अथ दिव्यनिधिदर्शनसाधनप्रयोगमाह—**यद्वर्चं** इति । **यद्वर्चं इति दिशांव्रताख्यं** साम (आ. गा. 5.7.140.1-10) संवत्सरं प्रतिदिनं दशवारमनुगानं कुर्वन् **एतेन कल्पेन** इत्यतिदेशादष्टमे काले भोजनं पात्रार्थं करश्च गृह्यते । एवं **चत्वारि वर्षाणि प्रयुञ्जानः ये दैवा** द्युलोकसंबन्धिनो निधयः सन्ति **तान् तेन** नियमेन प्राप्नोति ॥

भ - **यद्वर्चं** इति दिशांव्रतमित्यादि ये पृथिव्यामित्यन्तं निधिप्रकाशनप्रयोगविधानम् । **एतेन** कल्पेनेति । अष्टमे काले भुञ्जानः पाणिभ्यां पात्रार्थं कुर्वाण इति च [गृह्यते] ॥

**8. मासमुपवसेदेकमेकमयाचितं भुञ्जीत मयि वर्च इत्येतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जीत । निधयोऽस्य प्रकाशन्ते ये पृथिव्याम् ॥ ४ ॥**

सा - अथ पार्थिवनिधिदर्शनसाधनप्रयोगमाह—**मासमुपवसेदिति** । मासम् एकम् उपवसेत् । **एकं** मासमयाचितभोजी स्यात् । **मयि वर्चः**

1. BBl. प्रदर्शन for दर्शन.

2. P. adds एतत् after इति; B. संप्रति for साम...दिनं; Bl. om. साम.

3. P. om. अतिदेशात्; BBl. अष्टमकालभोजनपात्रार्थकरणान्यत्र गृह्यन्ते for अष्टमे...गृह्यते ।

4. B. कालस्तु for एवं; प्रयुञ्जानः Sayana follows the text as is found in PB; P. देवलोक० for दैवा द्युलोक०.

7. RAl. trans. ll. मूलमशून्यं कुर्यात् । मूलं स्थापयित्वा तस्मान्निर्गतं विनियुञ्जीत मूले स्थिते व्ययार्थं तस्मा (the commentary on मूलमशून्यं कुर्यात्) p. 201. ll. 6—7. between कल्पेनेति । and अष्टमे काले.

9. PB. om. मासमुपवसेद्...चत्वारि वर्षाणि. BBl. om. first एकम; P. वर्चसः for वर्चः.

12. BBl. om. निधि; B. प्रसाधन for साधन.

13. BBl. om. second एकं.

(आ. गा. 4.1.96.1) इति एतत्साम मासोपोषणादिनियमः सन् चत्वारि वर्षाणि प्रयुञ्जीत । एतेन कल्पेन इत्यनेनात्र एकमासमयाचितमिति विहिते भोजनकाले, पात्रार्थं पाणिभ्यां भोजनं, गानकाले दशानुगाननियमश्च परिगृह्यते । अस्य एवं कुर्वतः प्रयोक्तुः पृथिव्यां ये निधयः सन्ति ते प्रकाशन्ते ॥ ४ ॥

**9. अष्टरात्रोपोषितोऽमावास्यायां मुख आज्यं कृत्वा अग्निं नर इत्येतयोः पूर्वं मनसानुद्रुत्यान्ते स्वाहाकारेणाग्नौ जुहुयाद् । व्युष्टायां रात्रौ भूतौ [पश्यति ।] पञ्च ह्यस्य कार्षापणा भवन्ति । व्ययकृताश्च पुनरायन्ति । मूलमशून्यं कुर्यात् ॥**

सा - अथ भूतवशीकरणलभ्यधनसाधनप्रयोगमाह—अष्टरात्रोपोषित इति । सप्तमीप्रभृतिचतुर्दशीपर्यन्तम् उपोषितः सन्, अमावास्यायां मुखे आज्यं कृत्वा निधाय अग्निं नर इत्येतयोः पूर्वं (ग्राम. 3.7.72.1) साम मनसा अनुद्रुत्य उच्चार्य अन्ते सामान्ते स्वाहाकारेणाग्नौ मुखस्थमाज्यं जुहुयात् । रात्रौ व्युष्टायां सत्यां द्वौ भूतौ पश्यति । तयोर्हस्ताद् अस्य पञ्च कार्षापणा भवन्ति । तौ भूतौ तान् प्रयच्छत इत्यर्थः । ते च व्ययकृताः कृतव्ययाः पुनरायन्ति । अन्यथा न । तेषु मध्ये मूलं किंचिद् अशून्यं कुर्याद् अवशेषयेत् । मूलं स्थापयित्वा शिष्टं विनियुञ्जीत । तथा सति अवशेषितो मूलांशो व्ययकृतमंशं तस्मात् पुनराकर्षतीत्यर्थः ॥

---

1. BBl. एतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जीत for एतत्साम.
2. P. एतेन for अनेन.
3. P. अष्टमे काले for गानकाले.
6. My B. मुखं for मुखे.
8. पश्यति *See* CN.
11. BBl. om. साधन.
14. A. मुखसुसप्तमात्रं, BBl. मुखं सुहुतमाज्यं for मुखस्थमाज्यं.
16. P. om. तौ A. एतौ for तौ भूतौ.
17. P. om. अन्यथा न; P. मूलांशं for मूलं.

भ - अष्टरात्रोपोषित इति । अष्टरात्रोपोषितोऽयममावास्यायाम् आज्यं मुखे कृत्वा स्थापयित्वा अग्निं नर इत्येतयोः पूर्वं यत् साम तन्मनसानुद्रुत्य अन्ते सामान्ते स्वाहाकारेणाग्नौ जुहुयात् । तस्यां रात्रौ व्युष्टायां भूतौ द्वौ पश्यति । अस्य भूताभ्यां दत्ताः पञ्च कार्षापणाः सुवर्णस्य भवन्ति । हेत्येवशब्दार्थः । कार्षापणा व्ययकृताः [कृत]व्ययाः पुनरायान्ति । व्ययकाले मूलमशून्यं कुर्यात् । मूलं स्थापयित्वा तस्मान्निर्गतं विनियुञ्जीत । मूले स्थिते व्ययार्थं तस्मान्निर्गच्छतीति ॥

**10.** गवां प्रविशन्तीनां या पश्चात् स्यात्तस्याः शिरोऽभ्यनुमृज्य पुच्छमनुमृज्य पाणी सꣳहृत्यानङ्गमेजयस्तिष्ठेत् सर्वाꣳ रात्रिं द्वितीयमावर्तयन् । जम्भका हास्य सार्वकामिका भवन्ति सार्वकामिका भवन्ति ॥ ५ ॥ ७ ॥

सा - अथ जम्भकाख्यभूतविशेषाणां वशीकरणप्रयोगमाह—गवां प्रविशन्तीनामिति । प्रविशन्तीनां गोष्ठं प्रत्यागच्छन्तीनां गवां मध्ये या पश्चात् प्रविशन्ती स्यात् तस्याः शिरः अभ्यनुमृज्य अभितः अनुक्रमेण मार्जनं कृत्वा, ततः पुच्छमनुमृज्य एतावतैव सर्वाङ्गान्यनुमृज्येत्युक्तं भवति । पाणी संहृत्य संहतौ कृत्वा अनङ्गमेजयः शरीरकम्पनमकुर्वन्, सर्वां रात्रिं गोष्ठे तिष्ठेत् । द्वितीयम् अग्नि नर इत्येतयोर्द्वितीयं साम (ग्राम. 3.7.72.2)

---

1. RAl. add चमेह before अमावास्यायाम.
2. RAl. यं कृत for यत् साम.
3. RAl. साम्ना for सामान्ते.
4. RAl. भूमौ for भूतौ; RAl. दला for दत्ताः.
5. RAl. हेत्येनशब्दार्थोव कार्षापणाः for हेत्येवशब्दार्थः...
6. RAl. trans. मूलमशून्यं...व्ययार्थं तस्मा after कल्पेनेति । p.199.l.7
9. P. संहत्य for संहृत्य.
13. P. गवां गोष्ठं प्रविशन्तीनां for प्रविशन्तीनां....मध्ये.
14. BBl. om. अभितः.
15. P. om. एव; A स्वसर्वाङ्गानि for सर्वाङ्गानि.
16. P. संहत्य for संहृत्य.
17. Bl. adds: अव before तिष्ठेत्.

आवर्तयन् । जम्भकाः नाम भूतविशेषा अस्य प्रयोक्तुः सार्वकामिकाः सर्वकामसाधका भवन्ति ॥ ५ ॥

अभ्यासः खण्डसमाप्त्यर्थः ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे तृतीयाध्याये सप्तमः खण्डः ॥ ७ ॥

भ - गवां प्रविशन्तीनां या पश्चात् स्यात्तस्याः शिरःप्रभृतिपुच्छान्त-शरीरमनुमृज्य तथैव पाणी स्वीयौ संहृत्यानङ्गमेजयः अङ्गानां कम्पन-[मकुर्वं-]स्तिष्ठेत् सर्वां रात्रिं अग्नि नर इत्येतयोः द्वितीयमावर्तयन् । जम्भका नाम भूतविशेषाः अस्य सार्वकामिकाः सर्वकामसाधका भवन्तीति ॥ ७ ॥

॥ सप्तमोऽनुवाकः ॥

---

1. AB. Bl. आर्वतयन्यः अस्य प्रयोक्तुर्जम्भकाः for आवर्तयन् । जम्भकाः...प्रयोक्तुः.

2. AB. प्रदाः for साधकाः.

3. ABBl. om. अभ्यासः...०अर्थः.

4. A. सप्तमः खण्डः; B. तृतीये सप्तमः खण्डः for colophon.

7. R. om. संहृत्य...अग्निं नर इत्येतयोः.

## अष्टमः खण्डः

### 1. अथ यः कामयेत पुनर्न प्रत्याजायेयमिति ।

सा - अथ पुनर्जन्माभावकामस्य कांचिद्रात्र्युपासनां विवक्षुस्तत् प्रतिजानीते—अथ य इति । अथशब्दोऽधिकारे । यः पुमाननेकैर्जन्मभिर्दुःखितः सन् पुनर्न प्रत्याजायेयम् इति पुनर्जन्मान्तरं न गच्छेयम् इति कामयेत, तस्य प्रयोगं वक्ष्यामीति शेषः ॥

भ - अथ य इति । पुनर्न प्रत्याजायेयमस्मिन्नेव जन्मनि मुक्तः स्यामिति यः कामयेत तस्य कर्मसिद्धिकारणं वक्ष्यत इति शेषः ॥

### 2. रात्रिं प्रपद्ये पुनर्भूम्मयोभूङ्कन्याꣳ शिखण्डिनीं पाशहस्तां युवतिं कुमारिणीमादित्यश्चक्षुषे वातः प्राणाय सोमो गन्धायापः स्नेहाय मनोऽनुज्ञाय पृथिव्यै शरीरम् ॥

सा - अथ तदुपासनसाधनं मन्त्रमाह—रात्रिमिति । रात्रिं तदभिमानिदेवतां प्रपद्ये शरणं प्रपन्नोऽस्मि । उपास इत्यर्थः । कीदृशीम् ? पुनर्भूं पुनः पुनः प्रतिदिनं भवित्रीं जायमानाम् । मयोभूं मय इति सुखनाम, सर्वेषां प्राणिनां सुखस्य भावयित्रीम् । कन्यां कमनीयां, ग्रहनक्षत्रादिभिर्दीप्यमानां वा । "कनी दीप्तिकान्तिगतिषु" इति (भ्वा. 460) धातुः । शिखण्डिनीं शिखण्डः केशपाशः । प्रशंसायामिनिः, प्रशस्तकेशपाशाम् ।

---

3. A. कामं त्विन्द्राण्युपासनां for कांचिद्...

4. P. अधिकारद्योतनार्थः for अधिकारे.

5. Bl. जन्म for जन्मान्तरम्.

12. P. रात्र्यभि for तदभि.

The commentary on the passage (2) in Bl. is very corrupt, and hence is not referred to here.

16. P. दीप्तामिति वा for दीप्यमानां वा.

17. Bl. इति...पाशः for इनिः...पाशाम् ।

**पाशहस्तां** रक्षःप्रभृतिबन्धनाय हस्तेन धृतपाशाम् । **युवतिं** नित्यतरुणीम्, बाल्यवार्धक्याद्यविक्रियामित्यर्थः । **कुमारिणीं** कुत्सितं मारयन्तीति कुमारा रक्षःप्रभृतयस्तैस्तद्वतीम् । एवंगुणाया रात्रेः प्रसादात् । **आदित्यः** चक्षुरिन्द्रियाभिमानी देवः **चक्षुषे** इन्द्रियाय अर्थात् सम्यग्दर्शनाय, तादर्थ्ये चतुर्थी । भवत्विति । तथा **वातः** वायुदेवता **प्राणाय** पञ्चवृत्त्यात्मकाय मम देहान्तर्वर्तिने अनुग्राहको भवतु । अस्मच्छरीरं मा त्याक्षीदित्यर्थः । **सोमः** चन्द्रमा **गन्धाय** देहस्य सौरभ्याय । **आपः** अब्देवताः **स्नेहाय** देहस्यारूक्षतायै शरीरस्नैग्ध्याय । **मनः** मदीयं मानसं रात्रेरनुग्रहात् **अनुज्ञाय** अनुज्ञानमनुज्ञः, घञर्थे कविधानमिति भावे कप्रत्ययः, तस्मै भवतु । अनुक्षणं ज्ञानविशिष्टं भवत्विर्थः । **पृथिव्यै शरीरं**, विभक्त्योर्व्यत्ययः, या पृथिवी देवता [सा]मम शरीराय तद्दार्ढ्याय भवतु । यद्वा, **पृथिव्यै** देव्यै मम **शरीरं** भवतु । तदधीनरक्षणं भवत्वित्यर्थः ॥

भ - अथ **रात्रिं प्रपद्ये** तद्देवताभूतामिति रात्रेः प्रपत्तिप्रकारमाह । **रात्रिं प्रपद्ये पुनर्भूमित्यादिः पृथिव्यै शरीरमित्यन्तम्** प्रपत्तिमन्त्रः । अथ शरीरमिति पदस्यान्ते इतिकार उपहर्तव्यः । प्रपद्ये इति वाक्योपहारः । अनेन मन्त्रेण रात्रिं प्रपद्येतेति । अथ मन्त्रस्यार्थः कथ्यते । **रात्रिं** तदभि-

---

1. P. पशु for रक्षः ; Bl. om. रक्षः

2. P. बाध्यबाधकादिक्रियाम् Bl. बालयः काद्यविकार्याम् for बाल्य०

4. A. अर्कस्य Bl. अस्य for अर्थात्; B adds कर्कस्य मम after अर्थात्.

5. Bl. om. पञ्चवृत्त्यात्मकाय मम; P. मद्देहा० for मम देहा०

6. P. शरीरादस्मान् for शरीरं ; BBl. परित्याक्षीद्, A त्यक्षुः for त्याक्षीद्

7. P. त्वगिन्द्रियस्य for देहस्य.

8. Bl. अरक्षकाय for अरूक्षतायै P. स्निग्धत्वाय for स्नैग्ध्याय.

9. Bl. om. अनुज्ञानम् and घञर्थे कविधानमिति भावे कप्रत्ययः ; P. सनक्षत्राय for अनुक्षणं.

10. P. adds: अत्र after शरीरं.

11. P. om. मम.

13. RAl. अथवा for अथ; RAl. add अथ after इति.

15. RAl. वाध्याहसाः (Al. माः) for वाक्योपहारः.

16. RAl. कीर्त्यते for कथ्यते.

मानिनीं देवतामहं **प्रपद्ये** रात्रिदेवीमुपगच्छामि । **पुनर्भूं पुनः** प्रत्यहं दृश्यमानां **मयोभूं** सुखस्य भावयित्रीं **कन्यां** कमनीयां **शिखण्डिनीं** प्रशस्तशिखां शिखण्डशब्देनात्र धम्मिल्लस्याभिधानम्, **पाशं हस्ते बिभ्रतीं युवतीं** बाल्यवार्धक्याद्यवस्थारहितां **कुमारिणीं** कुः पृथिवी अत्रैतच्छब्देन तद्भवाः प्राणिनो लक्ष्यन्ते, पृथिवीसंभवान् प्राणिनो मारयन्तीं एवंविशिष्टां रात्रिं वाचि **प्रपद्ये** । **आदित्यो देवः चक्षुषे** दर्शनाय, भवतु । यावज्जीवं सम्यक् पश्येयमादित्यस्य चक्षुर्देवतायाः प्रसादादिति । **वातो** वायुः सर्वप्राणिनां प्राणरूपेणावस्थितो मम **प्राणाय** चिरंजीवनाय [अ]स्तु । **सोमः** [सुम]नोरूपेण मम **गन्धाय** गन्धशुद्धयेऽस्तु । **आपः स्नेहाया** रूक्षत्वाय सन्तु । **मनोऽनुज्ञाय,** अनुज्ञोऽनुज्ञानं सततं विज्ञानं तस्मै भवतु मे मनः । **पृथिव्यै शरीरमि**त्यत्र विभक्त्योर्व्यत्ययः । पृथिवी देवता शरीरायाविकलाय भवतु । न वा व्यत्ययो विभक्त्योः । यदिदं **शरीरं पृथिव्यै** पृथिव्यां वीरस्थानीया(नां या Al) स्थिति (!) ॥

**3. सा हैनमुवाचास्मिन्त्संवत्सरे मरिष्यस्यस्मिन्नयनेऽस्मिन्नृतावस्मिन् मासेऽस्मिन्नर्द्धमासेऽस्मिन् द्वादशरात्रेऽस्मिन् षड्रात्रेऽस्मिꣳस्त्रिरात्रेऽस्मिन् द्विरात्रेऽस्मिन्नहोरात्रेऽस्मिन्नहन्यस्याꣳ रात्रावस्यां वेलायामस्मिन् मुहूर्ते मरिष्यस्येहि स्वर्गं लोकं गच्छ देवलोकं वा ब्रह्मलोकं वा क्षत्रलोकं वा विरोचमानस्तिष्ठ विरोचमानामेहि योनिं प्रविश ॥**

---

1. RAl. रक्षिवीम् for रात्रिदेवीम.
2. कमनीयां *See* CN.
3. RAl. धर्मिष्ठस्य for धम्मिल्लस्य.
4. RAl. वार्धुषादिदयोपस्या for वार्धक्याद्यवस्था; RAl. अत्र तच्छब्देन for अत्रैतच्छब्देन.
9. RAl. सुसोमो (Al सोमो) नोरूपेण for सोमः सुमनोरूपेण.
10. RAl. अनुज्ञम for अनुज्ञ॰.
12. पृथिव्यां...*See* CN.
19. My TAB. तिष्ठन् for तिष्ठ.

सा - एवमुपासितारं प्रसन्ना सती रात्रिरित्थं ब्रूते इत्याह—**सा हैनमिति** । **सा ह** सा खलु प्रसन्ना रात्रिः **एनम्** उपासकम् **उवाच** ब्रवीति । लडर्थे छान्दसो लिट् । किमिति ? **अस्मिन् संवत्सरे** इत्यारभ्य **अस्यां वेलायाम्** इत्यन्तेन संवत्सरतदवयवभूतेष्वयनादिकालविशेषेषु **च मरिष्यसीति** । पुनर्मरणमुहूर्तं ब्रवीति **अस्मिन् मुहूर्ते** त्वं **मरिष्यसि** इति । अत **एव एहि** । **गच्छ** स्वर्गादीन् लोकान् यथाभिलाषम् । ब्रह्मणा ब्राह्मणजात्या याजनादिना लब्धव्यो लोको ब्रह्मलोकः । क्षत्रेण क्षत्रियजात्या प्रजापालनादिभिः प्राप्यो लोकः क्षत्रलोकः । एवमभिमतं लोकं गत्वा तत्र **विरोचमानः** दीप्यमानश्चिरं **तिष्ठ** । अथवा अस्मिन्नेव लोके **विरोचमानां** दीप्तामुत्कृष्टां ब्राह्मणादियोनिं **प्रविश** । तदर्थम् **एहि** आगच्छेति ॥

म - **सा हैनमुवाच** सा रात्रिः प्रसन्ना सती प्रपन्नमेतमुवाचेति लडर्थे लिट्, "छन्दसि लुङ्लङ्०" (पा. 3.4.6) इति । ब्रवीतीत्यर्थः । **अस्मिन् संवत्सरे मरिष्यसीत्यादि विरोचमानामेहि योनिं प्रविशेत्यन्तं** रात्रेर्वचनम् । संवत्सरादिषु कालविशेषानुक्रमेणास्य मरणमभिधायास्मिन्मुहूर्ते **मरिष्यसीति** वचनेनास्य मरणमुहूर्तं ब्रवीति । एहि आगच्छ मत्सकाशम् । स्वर्गादीन् लोकान् यथाकामं

---

2. A om. उवाच.

3. A. ब्रुवो वचिः शसो लुक् for लडर्थे...लिट् ; B. लटः for लडर्थे.

4. P. संवत्सरे for संवत्सर; P. त्वं for च.

5. AB. मुहूर्ते for मुहूर्तं; BlP. क्षणे for मुहूर्तं; ABBl. om. इति A. एवागच्छ, B. एव एह्यागच्छ, Bl. एव स्वर्गं गच्छ, for एव एहि । गच्छ.

6. P. adds प्राप्नुहि after अभिलाषम्; AB om. ब्रह्मणा; PBl. तप आदिना, B. वमादिना for याजनादिना.

7. A. लब्धा ये लोकाः for लब्धव्यो...ब्रह्मलोकः; BBl. om. ब्रह्मलोकः.

8. ABBl. om. क्षत्रलोकः.

9. P. अथ for अथवा.

13. रात्रेर्वचनम् *See* CN.

14. RAl. कालोविशेनु० for कालविशेषानु० ; वचनेनास्य *See* CN.

15. RAl. तत्सकाशम् for मत्सकाशम्.

गच्छ । तेषु लोकेषु [वि]रोचमानस्तिष्ठ । अथ लोकान्न गच्छेः । विरोचमानां देदीप्यमानां ब्राह्मणादियोनिं प्रविश । एहि तदर्थमिति ॥

## 4. नाहं योनिं प्रवेक्ष्यामि भूतोत्तमाया ब्रह्मणो दुहितुः सꣳरागवस्त्राया जायते म्रियते संधीयते च ॥

सा - एवं रात्र्योक्तमुपासको निराकुर्यादित्याह—नाहं योनिमिति । अहमुपासकस्त्वदुक्तां प्रशस्तामपि योनिं न प्रवेक्ष्यामि । योनेः प्राशस्त्याभावमेवाह—भूतेति । भूतोत्तमायाः भूतेषु श्रेष्ठायाः संरागवस्त्रायाः आर्तवेन रजसा संरक्तवस्त्रायाः ब्रह्मणः ब्राह्मणजातेः दुहितुः स्त्रिया अपि योनिं न प्रवेक्ष्यामि । कुतोऽप्रवेशः? इत्याह—यत एको योनिं प्रविष्टो जायते, जातः सन् म्रियते प्राणैर्वियुज्यते, मृतः सन् संधीयते देहान्तरेण संबध्यते अत इत्यर्थः ॥

भ - नाहं योनिं प्रवेक्ष्यामीत्यारभ्यापुनर्जन्मन इत्यन्तं विद्वानुपासको ब्रूयादिति शेषः । अत्र च परोक्षं रात्रेः प्रार्थना विदुषा क्रियते । विरोचमानां योनिं प्रविशेति भगवत्योक्तम् । तथा या हि स्पष्टा योनिः नाहं तामपि प्रवेक्ष्यामीति [विदुषा] । भूतोत्तमा[या] भूतेभ्यः (षु?) श्रेष्ठाया ब्रह्मणः सर्वभृतो दुहितुः संरागवस्त्राया आर्तवेन रजसा युक्तरागवस्त्रायाः । कुतो हेतोर्न प्रवेक्ष्यसीति (-क्ष्यामीति?) तत्राह—जायते म्रियते संधीयते चेति । जायते हि योनिं प्रविष्टः म्रियते च । पुनः संयुज्यते योन्यन्तरेण । अतो नाहं योनिं प्रशस्तामपि प्रवेक्ष्यामि ॥

---

2. RAl. हिवदर्शनिति for एहि...

6. A. ते उक्तां for त्वदुक्तां; P. प्राशस्त्यम् for प्राशस्त्याभावम्.

7. P. प्राणिश्रेष्ठायाः for भूतेषु...

9. P. adds: इति after प्रवेक्ष्यामि; P. adds: अतः after इति; P. जायते योनिमिति for यत एको योनिं प्रविष्टो जायते.

10. P. विमुच्यते for वियुज्यते; BBl. om. सन्.

14. RAl. तहा for तथा.

15. RAl. प्रवेक्ष्यति for प्रवेक्ष्यामीति.

19. RAl. प्रविष्टामपि for प्रशस्तामपि.

5. रात्रिस्तु मा पुनातु रात्रिः खमेतत् पुष्पान्तं यत्पुराणमाकाशं तत्र मे स्थानं कुर्वपुनर्भवायापुनर्जन्मन एतावदेव रात्रौ रात्रेर्व्रतं च रात्रेर्व्रतं च ॥ ८ ॥

सा - इत्थं निराकृत्य तां परोक्षेण स्तुवन् स्वात्महितमपुनर्भवमाह—रात्रिरिति । तुशब्दो वैलक्षण्यार्थः । अपि तु रात्रिः देवता मा मां पुनातु जन्मान्तरापादकात् कर्मणः शोधयतु । रात्रिरिति पुनरुक्तिरादरार्था । अथ प्रत्यक्षोक्तिः । हे रात्रे यत् पुराणं पुरातनं स्वर्गादिविलक्षणम् अर्चिरादिमार्ग-प्राप्यम् आकाशम् आसमन्तात् काशमानप्रभं ब्रह्मलोकाख्यं खमेतत् खमाकाशं पुष्पान्तं पुष्पं कर्मफलोपभोगस्थानम्, तस्यान्तं बहिर्भूतं तत्र तस्मिन्नाकाशे ब्रह्मलोके मे मम स्थानं कुरु । किमर्थम्? अपुनर्भवाय पुनर्भवपरिहाराय । अस्यैव विवरणम् अपुनर्जन्मने इति । न मे ब्रह्मलोकनिवासिनः पुनरुत्पत्तिः । "न स पुनरावर्तते" (श. ब्रा. 14. 9. 1. 18. प्र. उपनि. 1. 10) इति श्रुतेः । स्मृतिश्च—

"ब्रह्मणा सह सर्वे ते संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥"

---

2. My TSSAS. कुर्वन्नपुनर् for कुर्वपुनर्

4. A. स्वहितापुनर् Bl. स्वाहितापुनर् B. स्व...हितापु...for स्वात्महितमपुनर्.

7. Bl. ०फललक्षणम् for ०विलक्षणम्; P. ०मार्गं प्राप्य, A. ०मार्गमप्राप्यम्, BlB. ०मार्गमतः प्राप्यम् for मार्गप्राप्यम्.

8. P. काशमानं for काशमानप्रभं; A. om. ब्रह्म; P. adds अस्मिन् before खम्.

9. P. om. पुष्पं; P. कर्मफलोपेतं फलोपभोगस्थानम् Bl. कर्मफललोपभोगस्थानम् for कर्मफलोप०; ABBl. तस्यान्ततः for तस्यान्तं; P. om. आकाशे; A. आकाशप्रभे for आकाशे.

10. AB. om. मे; A. स्थाने लोके कुर्वन् for स्थानं कुरु; B. स्थाने for स्थानं; A. किमित्यर्थः for किमर्थम्; P. om. पुनर्भवपरिहाराय.

11. P. न खलु ब्रह्मलोकवासिनां, A न मे ब्रह्मलोक उपासीनस्य for न मे ब्रह्मलोक०.

12. AB. न च for न स: BBl. repeat न च पुनरावर्तते.

14. A. परिबत्सरे, B. प्रतिवत्सरे for प्रतिसंचरे.

(कू. पु. पू. ख. 12. 269.) इति । पूर्वोक्तमन्त्रसाध्यप्रपदनव्यतिरेकेण रात्र्युपासनजपान्तरं प्रयोगान्तरेष्त्रिरोपोषणादिव्रतान्तरं च नास्तीत्याह—रात्रौ [इति] । विषयसप्तम्येषा । रात्रिविषयं 'रात्रिं प्रपद्ये—' इत्यादिमन्त्रसाध्यं यत्प्रपदनमुक्तम् एतावदेव रात्रेः देवतायाः प्रसादनं प्रपदनं च व्रतम् इयदेव । यद्वा रात्रौ इत्यधिकरणसप्तमी । एतद् व्रतं रात्रावेव कर्तव्यं न दिवेति ॥

अभ्यासः खण्डसमाप्त्यर्थः ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे तृतीयाध्याये अष्टमः खण्डः ॥ ८ ॥

---

1. A. प्रतिपादन for प्रपदन; P. ०द्वारेण for ०व्यतिरेकेण.

2. BlA. रात्र्युपासनं जपान्तरप्रयोगा० for रात्र्युपासन...

3. AB om. एषा; A. इत्यादिकमत्र; Bl. इत्यादिकर्म० for इत्यादिमन्त्र०

4. P. प्रसाधनं for प्रसादनं; B om. प्रसादनं; P om. प्रपदनं च; ABBl. om. व्रतम ; ABBl. एतदेव for इयदेव.

5. P. after दिवेति ॥ adds: यद्वा रात्रिः अभिमतफलदात्री देवी, सा मां शरणागतमुपासकं पुनातु विलक्षणब्रह्मस्वरूपप्रकाशेन पवित्रीकरोतु । तत्सामर्थ्यं प्रतिपादयति—रात्रिः खम् इति । राति ददात्यपुनर्भवमुपासेकेभ्य इति रात्रिः । तथा च यास्कः- "रात्रिः कस्मात् ? प्ररमयति भूतानि नक्तंचारीण्युपरमयतीतराणि ध्रुवीकरोति रातेर्वा दानकर्मणः-"(निरु ii. 18)इति । तादृशी रात्रिरेव खं परमात्माकाशम् । किं तत् ? उच्यते—एतत् पुष्पान्तम् एतद् दृश्यमानं जगदेव पुष्पम्, तस्मिन्नन्तः अवसानं यस्य, तदेतत् पुष्पान्तम् । "तत्सृष्ट्वा तदेवानुप्राविशत्"—(तै उ. 2. 6. 1) इति श्रुतेर्जगदाकारेण पर्यवसन्नमित्यर्थः । तस्मात्सर्वात्मकब्रह्मरूपा रात्रिः यत् पुराणं चिरन्तनम् आकाशम् "ओं खं ब्रह्म खं पुराणमिति (बृ. आ. उ. 5. 1. 1) श्रुतिप्रसिद्धं परब्रह्माकाशं तत्र परमात्माकाशे मे मम स्थानम् कुरु करोतु । पुरुषव्यत्ययश्छान्दसः । किमर्थम् ? अपुनर्भवाय पुनर्भवो जन्म तद्राहित्याय । एतदेव विशदीकरोति —अपुनर्जन्मने इति । द्विरुक्तिरादरार्था । एतावदेव ममाभिलषितम्, नातोऽतिरिक्तं किंचिदस्ति । यद्वा यदुक्तं प्राक्, एतावदेव रात्रेर्व्रतम् उपासनात्मकं कर्म नातोऽधिकमिति भावः । तच्च रात्रौ कर्तव्यमिति शेषः ॥

6. A om. अभ्यासः...अर्थः ॥ and the Colophon; B om. only अभ्यासः...अर्थः ॥

भ - रात्रिरिति । रात्रिस्तु देवता मां पुनातु शोधयतु पूर्वकृतेभ्यः [कर्मभ्यः] प्ररोचयतु । रात्रिरिति पुनर्वचनमादरार्थशालीदं मन्त्राणाम । अथवा द्वितीयो रात्रिशब्दः उत्तरत्र बध्यते । रात्रिः प्रकृतविश्वस्याऽव्यक्तात्मिका खमाकाशमतः पुष्पान्तं कर्मफलोपभोगस्थानं पुष्पं तस्यान्तं बहिर्भूतं यत् पुराणं नित्यमाकाशं ब्रह्मलोकादिशब्दवाच्यं यदर्चिरादिमार्गेणावाप्यते रोचिरेव हि (?) तद्रूपा । अतः परं प्रत्यक्षा प्रार्थना—तत्राकाशे मे मम स्थानं कुरु । अपुनर्भवाय ममात्र । तदेव शब्दान्तरेणोच्यतेऽपुनर्जन्मन इति । एवं रात्रि[प्रार्थ]ना । ब्रह्मलोकप्रेप्सोः किमन्यदुपासनं भवति ? किं वान्यद् व्रतम् ? इत्याकाङ्क्षायामाह—एतावदेव रात्रौ रात्रेर्व्रतं च [इति] । एतावदेतन्मन्त्रेण पूर्वोक्तेन प्रपदनमेव रात्रौ विषये कृत्यं रात्रिप्रसादनं व्रतम् । व्रतं ह्येतदेवेति । अथवा रात्राविति रात्रावेव कार्यमिति पूर्ववदेवेति ॥

॥ अष्टमोऽनुवाकः ॥

---

2. RAl. ०शालीयं for ०शालीदं.

3. RAl. (आ)त्मिकात्खम् for (आ) त्मिका खम्.

4. RAl. तत्स्थानं for तस्यान्तं.

6. RAl. रोचिरोव (व R) हि for रोचिः०... ; RAl. प्रत्यक्षं प्रार्थनं for प्रत्यक्षा प्रार्थना.

7. RAl. कुरुतात् for कुरु; Al. मम एतदेव for ममात्र । तदेव.

8. RAl. रात्रिहीना for रत्रिप्राथंना.

# नवमः खण्डः

1. चतुरो मासान् पयोभक्षो गा अनु गत्वारण्ये शुचौ देशे मठं कृत्वा तत्र प्रविशेत्। कमण्डलुमुदकोपस्पर्शनार्थमादाय त्रीन्त्सप्तरात्राननुदक उपवसन्नृचं साम यजामह इत्येतयोः पूर्वं सदा सहस्रकृत्व आवर्तयन् यदि देवताः पश्यति सिद्धं तदिति। अथोत्थानम्। अन्तरिक्ष्या ह्यस्य सिद्धा भवन्त्यन्तरिक्षक्रमणं च। द्वाराणि चास्य विव्लीयन्ते ॥

सा - अथ स्वेच्छया लोकान्तरगमनानि कामयमानस्य प्रयोगमाह— चतुर इति। मासचतुष्टयपर्यन्तं कर्तव्यमिदं व्रतम्। तत्र क्षीरमेव पिबन् प्रतिदिनं मासत्रयं गा अनुगच्छेत्। ततश्चतुर्थे मासि शुचौ अमेध्यादिरहिते विशाले अरण्ये देशे गच्छन् मठं तृणकुटिं कृत्वा तत्र प्रविशेत्। उदकोपस्पर्शनार्थमाचमनार्थमेव कमण्डलुम् उदकपात्रम् आदाय तत्रोपासीत। त्रीन् सप्तरात्रान् एकविंशतिरात्रपर्यन्तम् अनुदकः उक्ताचमनव्यतिरेकेणोदककार्याणि स्नानपानादीन्यकुर्वन् उपवसन् किमप्यनश्नन् ऋचं साम यजामहे इत्येतयोः पूर्वं प्रथमं साम (ग्राम. 9. 2. 369. 1) सदा प्रत्यहं

---

2. MyMA. गाम् for गाः; B. गां नु for गा अनु.
4. MyB. उदक उप० for अनुदक उप०.
6. PBBl. अन्तरिक्षाः for अन्तरिक्ष्याः.
8. BBlT. विव्लीयन्ते for विव्लीयन्ते.
9. Bl. ०गमनकाम० ०गमनानि काम०; AB om. प्रयोगम्.
10. A om. कर्तव्यम्; AB om. तत्र; Bl. om. एव.
12. P. विजने for विशाले.
13. P om. आचमनार्थम् P. एकं for एव; P. आसीनः for उपासीत.
14. P. ०आचार० for ०आचमन०
15. ABBl. स्नानादि न कुर्वन् for स्नान०; ABBl. om. उपवसन्.
16. A. अनयोः for एतयोः

सहस्रकृत्वः आवर्तयन् उपासको यदि तस्मिन् काले देवताः पश्यति तदानीं तद् व्रतं सिद्धं फलवदिति जानीयात् । अथ अनन्तरम् उत्थानं व्रतपरित्यागः । अस्य एवंकृतव्रत उपासकस्य अन्तरिक्ष्या अन्तरिक्षचारिणो देवगणाः, गन्धर्वादयः सिद्धाः विधेयाः भवन्ति । न केवलमेतावदेव, अपि तु अन्तरिक्षे निरालम्बे देशे क्रमणं पादविक्षेपः संचारः च अस्य भवति । तथा स्वर्गादीनां लोकानां द्वाराणि पिहितानि अस्य विव्लीयन्ते विव्रीयन्ते उद्घाटितकवाटानि भवन्ति । व्ली वरणे इति धातुः ॥

भ · अथान्तरिक्षचरणादीनि [कामयमानस्य प्रयोगमाह—चतुरो मासानि]त्यादिना द्वाराणि चास्य विव्लीयन्ते इत्यन्तेन । आदितश्चतुरो मासान् पयोभक्षो दुग्धमेव च गवां भक्षयेत् । प्रतिदिनं गा अनुगम्य चतुर्षु मासेषु पूर्णेषु अरण्ये शुचौ देशे मठं कुटीं कृत्वा तत्र प्रविशेत् । ततस्तत्रैवासीत उदकोपस्पर्शनार्थनिमित्तकार्यमेव कमण्डलुमादाय । मठे त्रीन् सप्तरात्राननुदक उदककार्याण्याचमनव्यतिरिक्तानि स्नानपानादीन्यकुर्वन् उपवसन् अनश्नन् किमपि ऋचं साम यजामहे इत्येतयोः पूर्वं सदा प्रत्यहं सहस्रकृत्व आवर्तयन् यदि त्रिः सप्ताहे पूर्णे पूर्वं पश्चाद्वा देवताः पश्यति । अथ अनन्तरमेव व्रतादुत्थानं कुर्यात् सिद्धं तत् कर्मेति निश्चित्य । अथैतस्य कर्मणः फलोत्प[त्तिम]ाह—अन्तरिक्षचारिणो देवगणा अस्य सिद्धा विधेया भवन्ति[इति] । अन्तरिक्षक्रमणमन्तरिक्षेऽप्रतिष्ठे पदविक्षेपः अन्तरिक्षचरणमित्यर्थः, चास्य भवति । द्वाराणि च संवृतानि अस्य विव्लीयन्ते विव्रियन्ते उद्घाटितक[वाटानि भवन्ति] ।

---

1. BlB. om. यदि ; P. कस्मिंश्चित् , BBl. यस्मिन् for तस्मिन् .

2. P. तदा for तदानीं.

3. P. om. व्रत ; A. अन्तरिक्ष्या हा अस्यान्तराच्छान्न अन्तरिक्षगता गन्धर्वादयः, B. अन्तरिक्ष्या अन्तर्यन्तराच्छाद्यमन्तरिक्षा त्वां गन्धर्वादयः for अन्तरिक्ष्या....गन्धर्वादयः; PBl. अन्तरिक्षाः for अन्तरिक्ष्याः.

4. P. अवधेयाः for विधेयाः.

5. P. निरालम्बने for निरालम्बे ; AB. om. अस्य.

6. P. अथ for तथा ; P. adds अपि after पिहितानि ; Bl. विहितानि for पिहितानि ; BBl. विव्लियन्ते विद्वियन्ते for विव्लीयन्ते...

7. BBl. प्ली for व्ली.

10. RAl. एका for एव.

18. RAl. प्रति० for पद०

20. R. उद्घाटिकभा Al. उद्घाटिकभावाभाव for उद्घाटितकवाटानि.

2. द्वितीयमेतेन कल्पेन प्रयुञ्जानः कामचारी मनोजवा भवति ॥

सा - अथ तत्रैव प्रयोगान्तरमाह—द्वितीयमिति । द्वितीयम् "ऋचं साम यजामहे" इत्येतयोः द्वितीयं साम (ग्राम. 9. 2. 369. 2) एतेन चतुरो मासानित्यादिनोक्तेन कल्पेन सदा सहस्रकृत्वः प्रयुञ्जानः कामचारी स्वेच्छया तत्तल्लोकसंचारी मनोजवा मनोवद्वेगवांश्च भवति ॥

भ - द्वितीयमेतेन कल्पेन प्रयुञ्जानः कामचारी मनोजवा मनोवेगश्च भवतीति ॥

3. शुक्लानुपवसेत् सर्वान् कालान्मृष्टः शुक्लवासाश्चन्दनेनानुलिप्तः सुमनसो धारयꣳस्त्यमू षु पूर्वꣳ (ग्राम.9-11.332.1) सदा सहस्रकृत्व आवर्तयन् ये मानुषाः कामास्तानवाप्नोति ॥

सा - अथ मानुषाणां राजादीनां भोगान् कामयमानस्य प्रयोगमाह—शुक्लानिति । शुक्लान् सर्वेषु मासेषु शुक्लपक्षगतान् सर्वान् कालान् उपवसेन्नाशनायीन्मृष्टः सिक्तः सर्वदा स्नात इत्यर्थः । मृषु वृषु मृषु सेचन इति धातुः । शिष्टं स्पष्टम् ॥

---

2. Bl My जवो for जवाः.

4. Bl. इत्यस्य for इत्येतयोः.

6. BBl. जवः fro ०जवाः ; AB. om. मनोवद्वेगवांश्च.

9. MyAMTB. दृष्टः Bl. पृष्टः for मृष्टः.

10. My ०वाससा for ०वासाः.

13. BBl. मनुष्यादीनां for मानुषाणां राजादीनां; P. भोगं for भोगान्, Bl. भोगकाम० for भोगान् काम०; A. कामयमानानां for कामयमानस्य.

14. P. om. शुक्लान् सर्वेषु...इति धातुः ।.

15. B. दृष्टः Bl. पृष्टः for मृष्टः; Bl. सुस्नातः for सर्वदा स्नातः ; PA. जिषु for पृषु.

भ - अथ मानुषान् सर्वान् भोगान् कामयमानस्याह—शुक्लानिति । सर्वान् कालान् सर्वान् पूर्वपक्षानित्यर्थः । शिष्टं स्पष्टम् । इति ॥

**4. द्वितीयमेतेन कल्पेन प्रयुञ्जानो ये दैवास्तांस्तेन ॥**

सा - अथ दिव्यभोगकामसाधनमाह—द्वितीयमिति । त्यमू ष्विति द्वितीयं साम(ग्राम.9-11.332.2) शुक्लानुपवसेदित्यादिनोक्तेन कल्पेन । सिद्धमन्यत ॥

भ - अथ [दिव्यान्] भोगान् कामयमानस्याह--द्वितीयमिति । त्यमू ष्विति द्वितीयं पूर्वोक्तकल्पेन शुक्लानुपवसेदित्यादिना प्रयुञ्जानस्तेन साम्ना ये दैवाः कामास्तानवाप्नोति । इति ॥

**5. माससुपवसेदेकमेकमयाचितं भुञ्जीत मयि वर्च इत्येतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जानस्त्रयाणां लोकानामाधिपत्यं गच्छति व्यृद्धावप्यस्यैकस्य ॥ १ ॥**

सा - अथ त्रैलोक्याधिपत्यं कामयमानस्य प्रयोगमाह—मासमुपवसेदिति । मासं चतुर्षु वर्षेषु एकम् अयुग्मम् उपवसेत् । युग्ममेकम् अयाचितं भुञ्जीत । मयि वर्च (आ. गा. 4.1.96.1) इति एतत्साम एतेन कल्पेन मृष्टः शुक्लवासा इत्यादिनियमेन चत्वारि वर्षाणि प्रयुञ्जानस्त्रयाणां लोकानामाधिपत्यं गच्छति प्राप्नोति । अस्य विहितस्य प्रयोगस्य मध्ये एकस्य अङ्गस्य व्यृद्धावपि वैकल्येऽपि संकीर्तितं फलं भवत्येव ॥ १ ॥

---

5. P. ०कामस्य for कामसाधनम.

6. AB. om. साम; Bl. एतेन for साम; A. उक्तकल्पेन for उक्तेन कल्पेन.

10. RAl. देवाष्कामा यान for देवाः कामास्तान्.

13. Bl. वृद्धा० for व्यृद्धा०.

14. P. om. प्रयोगम.

15. AB. मासचतुष्टयपक्षेषु एकमासम् (०युगम् B) उपवसेत् । एकं युग्ममनुग्मम for मासं चतुर्षु...युग्ममेकम.

17. A. अभिहित, BBl. अभिहितेन for एतेन; Bl. पृष्ट for मृष्टः.

19. AB. व्रतस्य for अङ्गस्य, Bl adds व्रतस्य after अङ्गस्य.

भ - अथ **मासमुपवसेदेक**मित्यादे**र्व्यृद्धावप्यस्यैकस्ये**त्यन्तस्यार्थः । चतुर्थं एकमयुग्मं मासमयाचितमेव **भुञ्जीत** । एतेन कल्पेन स्पष्टं शुक्लवासा इत्यादिना कल्पेन । **मयि वर्चं** (आ. गा. 4.1.96.1) इत्येतच्चत्वारि **वर्षाणि प्रयुञ्जानः** सदा सहस्रकृत्व आवर्तयन् त्रैलोक्यस्याधिपत्यं गच्छतीति ॥

**व्यृद्धावप्यस्यैकस्येति** । अथ पूर्वोक्तस्य व्रतकालावस्य मध्ये एकस्यान्यतमस्य व्यृद्धौ वैकल्येऽपि कीर्तितं फलं लभत एवेति ॥

**6. अथ यान्यनादिष्टकामकल्पानि तेषां यथाश्रुति स्मृतिलिङ्गैः कामाः क्षुरसंयुक्ताः ॥**

सा - तदेवं केषांचित्साम्नां विधय उक्ताः । अथ तत्रानुक्तानामितरेषां संहितायामधीतानां कामान् कल्पांश्च संगृह्याह—**अथेति** । **यानि** सामानि सामसंहितासमाम्नातानि **अनादिष्टकामकल्पानि** अस्येदं फलम्, अस्यायं साधनः कल्पः इत्यादिष्टोपबन्धानि न सन्ति **तेषां यथाश्रुति** श्रुत्यनतिक्रमेण मन्त्रेषु श्रूयमाणफलानतिक्रमेण **स्मृतिलिङ्गैः** वेदविदाचार्याणां प्रयोगैः **कामाः क्षुरसंयुक्ता** नियमसंयुक्ता अवगन्तव्याः ॥

---

6. RAl. एकस्मातान्यतमस्यष्टद्धो विकल्पतेऽपि for एकस्य...वैकल्येऽपि.

7. RAl. add शुद्धवेति after एवेति.

9. MyAB कामाक्षरसंयुक्ताभिप्रायिकं (०प्रायिकं A; ०क्ता आभिप्रायिकं B) Bl. कामाक्षरसंयुक्तः for कामाः...०संयुक्ताः ॥ आभिप्रायिकं

10. P. अत्र for तत्र

11. Bl. संहितानाम् for संहितायाम् ; P. अनधीतानां for अधीतानाम्.

12. P. ०संहितायामाम्नातानि for ०संहिता...

13. P. साधनकलापः BBl. साधकः...for साधनः कल्पः.

14. A. मन्त्रेण for मन्त्रेषु ; A. adds: श्रुति before स्मृति ; A. कामाक्षरसंयुक्ता नियमसंयुक्ता इत्यवगन्तव्यम्, BBl, कामाक्षरसंयुक्तो नियमःसंयुक्तोऽवगन्तव्यः for कामाः...,

भ - उक्ताः साम्नां विषयाः केषांचित् । अथ येषां साम्नां कामकल्पा [अनुक्तास्तां-] श्चानादिष्टकामकल्पानीत्यादिना आभिप्रायिकं कर्मेत्यन्तेना- [ह] । यानि सामानि समाम्नातानि अनादिष्टकामकल्पानि अस्येदं फलमेष कल्पो नेत्येवमनादिष्टो- [पबन्धानि] येषां तान्येवंविधानि । तेषां यथाश्रुति श्रुत्यनतिक्रमेण मन्त्रेषु श्रूयमाणफलानतिक्रमेण स्मृतिलिङ्गैर्वेदविदामाचार्याणां स्मृतिभिर्लिङ्गैर्मन्त्रस्तोत्रनिधानादिगतैः कामाः कल्पाः क्षुरसंयुक्तास्तीक्ष्ण- धारासंयुक्ताः ॥

## 7. आभिप्रायिकं कर्म ॥ २ ॥

सा - अथाभिहितानां बहूनां विधानानां मध्ये तत्तत्फलकामानुगुण्येन प्रयोग इत्याह—आभिप्रायिकं कर्मेति । कर्म सामाध्ययनलक्षणम् अभि- प्रायानुगुणं स्यात् । यद्यस्मै रोचते तेन तत्कार्यमिति ॥ २ ॥

भ - अथ यदि बहूनि सामानि लिङ्गादिभिः समानकामानि प्रतीतानि तेषु कस्य साम्नः कर्मकरणप्रयोगः कार्यः ? तत्राह—आभिप्रायिकं कर्मेति । कर्तुरभिप्रायानुगुणं कर्म स्यात् । यदस्मै रोचते तत्कार्यमिति सिद्धं भवतीति ॥

## 8. सोऽयं प्राजापत्यो विधिस्तमिमं प्रजापति- र्बृहस्पतये प्रोवाच बृहस्पतिर्नारदाय नारदो विष्वक्सेनाय विष्वक्सेनो व्यासाय पाराशर्याय व्यासः पाराशर्यो जैमिनये जैमिनिः पौष्पिञ्ज्याय पौष्पिञ्ज्यः पाराशर्यायणाय पारा-

---

1. RAl. विषः for विषयाः.

2. RAl. व्रतान्तप्रायकं for आभिप्रयिकं ; RAl. कर्मेत्यन्तेनावानि for कर्मेत्यन्तेनाह । यानि.

3. RAi. एककल्पेनेत्येन (०कल्पेन तेन. R) मानदिष्टो for एष कल्पः...

9. ABBl. अथवा for अथ ; P. विहितानां for अभिहितानां ; ABBl. तावत् for तत्तत् .

11. Bl. ०गुण्येन for गुणम् .

14. RAl. कर्तुरर (क Al.) स्य साम्नः राभिप्राया०. for कर्तुरभिप्राया०

17. My. व्याडाय for व्यासाय ; My. व्याडः for व्यासः.

18. P. पौष्पिण्ड्याय पौष्पिड्यः for पौष्पिञ्ज्याय पौष्पिञ्ज्यः.

शर्यायणो बादरायणाय बादरायणस्ताण्डिशाट्यायनिभ्यां ताण्डिशाट्यायनिनौ बहुभ्यः ॥ ३ ॥

सा - अथास्य सामविधानस्य संप्रदायप्रवर्तकानाचार्याननुक्रमेण संकीर्तयति—सोऽयमिति । सोऽयं "ब्रह्म ह वा इदमग्र आसीद्" (सा. वि. ब्रा. 1. 1. 1)इत्यारभ्यैतत्पर्यन्तो यः साम्नां प्रयोगविधिरुक्तः सोऽयं प्राजापत्यः प्रजापतिना विश्वसृजा सर्वज्ञेन चतुर्मुखेन ब्रह्मणा दृष्टः, नहि तस्योपदेष्टा कश्चिदपि संभवति । तमिमं सः प्रजापतिर्बृहस्पतये प्रोवाच इत्यादि बहुभ्यः इत्यन्तं स्पष्टम । विष्वक्सेनो नामर्षिः । तत्प्रकरणत्वात् । सन्ति बहवो व्यासा द्वापरे द्वापरे [इति पाराशर्यायेति] ॥

भ - अथ "ब्रह्म ह वा इदमग्र" इत्यारभ्य यः सामविधिरुक्तः तस्य गुरुक्रममनुविवक्षुर्मूलगुरुं तावदाह—सोऽयं प्राजापत्यो विधिरिति । सोऽतीतोऽयं विधिः प्रजापतिना आदिना सर्वज्ञेन दृष्टः न तस्य कश्चिदादेष्टा विद्यते, नैसर्गिकसिद्धः, असौ स्वयमपश्यत् ॥

अथ प्रजापतिरित्यारभ्य गुरुक्रममाह—तमिमं प्रजापतिरित्यादिना बहुभ्य इत्यन्तेन । नारदो विष्वक्सेनायेति । विष्वक्सेनो नाम कश्चिदृषिर्विद्यते । विष्वक्सेनो व्यासाय पाराशर्यायेति । बहवो हि व्यासा भवन्ति द्वापरे द्वापर इति पाराशर्यायेति विशिष्यते । स्पष्टशेषः ॥

---

3. ABBl. मुख्यक्रमेण for अनुक्रमेण.

6. P. adds नः before सर्वज्ञेन.

8. P. om. विष्वक्सेनो...पाराशर्यायेति ; Bl. विष्वक्सेनव्युत्पि[illegible]करणत्वात् सन्ति बहवो व्यासाः । द्वापरे द्वापरे । for विष्वक्सेनो०...

12. RAl. तोतीतोयविधिः for सोऽतीतोऽयं विधिः ; RAl. आदितान सर्वज्ञतं दृष्टः for आदिना... ; RAl. कस्यचिदादेष्टा for कश्चिदादेष्टा.

13. RAl. सिद्धिः for सिद्धः.

14. RAl. पर्व for गुरु.

15. RAl. वृष्णिः for ऋषिः.

17. RAl. द्विपरे (दे Al.) for द्वापरे.

ननु बादरायणशिष्यो जैमिनिरिति प्रसिद्धिः । बादरायणग्रहणं पाराशर्याभिन्नोऽयमिति न पर्यवसितुमिति वरं भाष्यम् । बादरायणस्ये[दं] जैमिनेः शिष्यत्वं दर्शयति । अतः कथं तस्मिन् वंशे जैमिनि[र]र्वाचीनः ? उच्यते । गु[रु]र्बादरायणः पाराशर्यो व्यासः । बादरी बदरीसंघस्तस्मिन् निवसतीति व्यासो बादरायण उच्यते । बदरो नाम कश्चिदृषिस्तस्यापत्यं बादरिस्तदपत्यं बादरायणः ताण्डिशाट्यायनिनावाचार्यौ बहुभ्यो वेदाचार्येभ्यः प्रोचतुरिति ॥

## 9. सोऽयमनूचानाय ब्रह्मचारिणे समावर्तमानायाख्येयः ॥ ४ ॥

सा - सोऽयं विधिः अनूचानाय "अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः" (अमर. 2. 7. 10) इत्युक्तलक्षणाय तस्मै ब्रह्मचारिणे अनुष्ठितगुरुकुलवासादिनियमाय समावर्तमानाय गुरुकुलाद् ब्रह्मचर्यं समाप्य स्वगृहं प्रत्यावर्तमानाय आख्येयः उपदेष्टव्यः ॥ ४ ॥

भ - अथास्य सामविधिभागस्याध्ययनाधिकारिणमाह — सोऽयमिति । समावर्तमानायेति अन्यं सर्ववेदभागमधीत्य गुरुकुलात् समावर्तिष्यमानायेति । आख्याय(!) आख्येयः । स्पष्टमन्यदिति ॥

---

1. प्रसिद्धिः *See* CN ; बादारायणग्रहणं *See* CN.

3. RAl. पुत्रत्वं for शिष्यत्वं.

4. RAl. ०संघान्ते निवासेति for ०सघस्तस्मिन् निवसतीति.

7. RAl. प्रोचुः for प्रोचतुः.

9. My TBAM RAl. आख्याय for आख्येयः.

10. ABBl. om. सोऽयं. . .इत्युक्तलक्षणाय.

11. P. om. तस्मै.

16. आख्येयः *See* CN.

**10.** उपाध्यायाय ग्रामवरꣳ सहस्रꣳ श्वेतं चाश्वं प्रदायानुज्ञातो वा यं कामं कामयते तमाप्नोति तमाप्नोति ॥ ६ ॥ ९ ॥

**सा** - उपाध्यायाय सामविधानोपदेष्ट्रे **ग्रामवरं** श्रेष्ठं ग्रामं **सहस्र**संख्यं धनं **श्वेतं चाश्वं प्रदाय** अयं शिष्येण प्रयोक्तव्यः । **वा** अथवा **य** एतानि दातुं न शक्नुयात् स शुश्रूषया अल्पधनप्रदानेन चोपाध्यायं तोषयित्वा तेन **अनुज्ञातः** सन् उक्तविधानेन सामानि प्रयुञ्जानो **य कामं** कामयितव्यं फलं **कामयते तम् आप्नोति** ॥ ५ ॥

अभ्यासः खण्डसमाप्त्यर्थः ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे तृतीयाध्याये नवमः खण्डः ॥ ९ ॥

---

3. After आप्नोति M. adds: इति तृतीयः प्रपाठकः ॥ हरिः ओम् ॥ सामविधनम । आक (समुच्चित्य) खण्डं ९५ = हरिः ओम् । शुभमस्तु । श्रीगुरुभ्यो नमः । श्रीमते नमः ॥;

T. तृतीयोऽध्यायः ॥ सामविधानब्राह्मणं समाप्तम् ॥...प्रभवाब्दश्रावणे कोनेरिराजपुरनिवासिना वेङ्कटेश्वरस्य पुत्रेण अण्णेन लिखितमिदं सामविधान-ब्रह्मणम् ॥ हरिः ओम् ॥ शिवायै गौर्यै नमः । उमामहेशाय नमः ॥

S. हरिः ओम् ॥ सामविधानं समाप्तम् ॥ [साम] विधौ तृतीयः प्रपाठकः ॥ श्रीरामचन्द्राय परब्रह्मणे नमः ।

SS. सामविधौ तृतीयः प्रपाठकः । सामविधानं समाप्तम् ॥ हरिः ओम् ॥ श्रीगुरुभ्यो नमः श्रीधर्माम्बिकायै नमः ॥

V. इति सामविधानब्राह्मणे तृतीयः प्रपाठकः ॥ समाप्तः ॥

4. A. ०देष्टुः for देष्ट्रे; P. सहस्रं तत्संख्यं for सहस्रसंख्यं.

5. P. इदं for अयं; ABl. यदि for यः.

6. A. शुश्रूषाल्प० for शुश्रूषया अल्प०

8. P. फलविशेषं for फलं; P. अवाप्नोति for आप्नोति.

9. AB. om. खण्ड.

10. A. इति सामविधानब्राह्मणभाष्ये तृतीयोऽध्यायः समाप्तः ॥ for the colophon.

11. B. ब्राह्मणभाष्ये नवमः खण्डः ॥ for ब्राह्मणे...

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्य-धुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे सामविधानाख्ये तृतीये ब्राह्मणे तृतीयोऽध्यायः ॥ ३ ॥

इति तृतीयः प्रपाठकः ॥

इति सामविधानं ब्राह्मणं समाप्तम् ॥

भ - अथोपासिनमाह—उपाध्यायेति ॥

इति सामविधानब्राह्मणे आचार्यभरतस्वामिकृतौ पादार्थमात्रविवृतौ तृतीयोऽगात् प्रपाठकः ॥

॥ इति सामविधानभाष्यं समाप्तम् ॥

ॐ

---

1. B. om. this verse.

4. P. आचार्येण for अमात्येन ; B. om. वेदार्थप्रकाशे.

5. B. om. तृतीये ; B. adds भाष्ये after ब्राह्मणे and ओम् ओम् ॥ after (अ)ध्यायः.

8. RAl. आचासिनः for उपासिनम् .

11. RAl. ०भाष्यसमाप्तः ॥ for भाष्यं..; After समाप्तम् ॥ Al. ॥ शुभमस्तु ॥ संवत् १९०५ शाके १७७० मर्गशिरकृष्णतिथौ शनिवासेर ॥ लिखायतं श्रीमन्नुमहाराजाधिराजराजेन्द्र श्री श्री श्री श्री श्री श्री श्री श्री श्री श्री श्री सवाईविनयसिंहजीबहादर ॥ लिखितं भगवान् ॥ शुभम् ॥ यादृशीपुस्तकं दृष्ट्वा तादृशी लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥ १ ॥

# CRITICAL NOTES

(REFERENCES ARE TO PAGE AND LINE NUMBERS)

P. 3. L. 8. RAI. read पञ्चस्वाध्यायसान्त which makes no sense. Could it be पञ्चस्वाध्यायादियज्ञ ?

—. L. 10. न नामरूपमित्यनुव्याख्यास्याम: This appears to be in explanation of ब्रह्मन् and we have added here इति in square bracket for obvious reasons. The commentator seems to have explained what is ब्रह्मन् elsewhere, perhaps in his commentary on Chāndogya. We hav reason to presume that Bharatasvāmin had written commentaries on all Sāma-Brāhmaṇas. Vide our Introduction.

P. 3. L. 3. RAI read रसस्तपस: which we have corrected as रसस्तपस:. Again both Mss have तपसोऽधिष्ठातृविज्ञानात्मक:. But would it not be more appropriate if it was to qualify तेज: the following word and read as तपसोऽधिष्ठातृविज्ञानात्मकं ?

— L. 15. "त्वं रुद्रस्त्वं ब्रह्मा त्वं प्रजापति:" quoted by Sāyaṇa refers to a passage in the Mahānārāyaṇa-Upaniṣad. Bharatasvāmin also quotes: "त्वं यज्ञस्त्वं वषट्कारस्त्वं ब्रह्मा त्वं प्रजापति:" (P. 5. L. 16) which too refers to the same passage. But both of them have not quoted the sentence in full. The passage is: "त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्व॰ रुद्रस्त्व॰ विष्णुस्त्वं ब्रह्मा त्वं प्रजापति: ।" (म.ना. उ. 16. 1)

P. 6. L. 14. अन्तरहस्य here refers to the Chāndogya-Upaniṣad which forms the latter part of the Mantra Brāhmaṇa.

P. 7. L. 12. R. reads तत अवधिष्ठ while Al तत अधिष्ठ. Since the reading in both is wrong we have emended it as तदधिष्ठम् .

P. 8. L. 13. ABP अनन्तरं चात्र for अनन्तरश्चात्र which, while being explained, is again quoted as अनन्तरमित्यस्य. The Sūtras त्रीणि मन्द्रं etc. are quoted from the Ṛk-prātiśākhya where the word अनन्तर is in masculine as अनन्तर: and not in neuter. In his word by word explanation, Sāyaṇa, in fact, refers to it as अनन्तर: and interprets it as अव्यवहित:. We have, therefore, adopted the correct reading in both the places since it is clear that अनन्तर: is wrongly written in these Mss as

अनन्तरम्. Again Sāyaṇa as well as Bharatasvāmin has यमोऽविशिष्टः for यमोऽविशेषः of the Ṛk-prātiśākhya. We have, however, retained the reading unaltered in both the commentaries.

P. 10. RAl wrongly read स्वरास्ते which we have corrected as स्वरा ये in conformity with Ṛk-prātiśākhya.

—. L. 10. RAl read अवशिष्टः which is clearly wrong. Hence we have corrected it as अविशिष्टः.

—. L. 20. In place of अतिस्वार्यः R has विश्वर्यः and Al विश्वार्यः— both are wrong. Here the reference is to the last of the seven Svaras of the Sāman, which is, of course, अतिस्वार्य. Cp. क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याः, Taittirīya-prātiśākhya. 23. 2. cp. also: क्रुष्टः प्राजापत्यः... SVB. 1. 1. 14. We have, therefore, adopted the right reading.

P. 13. L. 16. Al reads the line य एवं प्रकारेण while R वै एवं प्रकारेण. It is obviously an error committed by the scribe. We have, therefore, set it right.

—. L. 18. RAl read the line: कासु (Al. कामु) नः प्रतिष्ठायां विद्वान् प्रतिष्ठतीति which we have emended as का साम्नः प्रतिष्ठा यां विद्वान् प्रतितिष्ठतीति.

P. 16. L. 3. Both the Mss are corrupt. R reads षद्सूनाम् and Al षह्युनाम् in place of बहूनाम् in both the places, i. e. in ll. 3&4. Further RAl have सर्वेनाम्नाम् for समानायामृचि !

—. L. 14. R reads श्रोत्रिय च स्व इति while Al श्रोत्रिय चस्व इति. Both are equally corrupt. Could it be श्रोत्रियश्चाख्याति ?

—. L. 12. R जानांकेवचनम् and Al जातांकेवचनम् for जातावेकवचनम्.

—. L. RAl read the line साम नाम समाने छन्दोबहूनाम् which is not intelligible. Therefore, we have emended it as साम्नां समानत्वात् छन्दोबहूनाम्.

P. 17. L. 7. The line is very corrupt and unintelligible. Al reads it देवतास्त्वन्यास्तु ऋक्रागातावत्। यथा रथन्तरस्य स्वननिन्द इति ।

P. 18. L. 2, RAl read पृष्टे-(ष्ठे Al.) षु सू तेषु which is wrong. We have corrected it as सृष्टेषु तेषु.

P. 21. L. 1. In both the Mss the line is very corrupt. RAl read it: विध प्रब्रुय इति ब्राह्मणां सम्राडितो वाक्यम्. Are we to understand it as: विविच्य प्रब्रूम इति ब्राह्मणं सामान्यतो वाक्यम् ?

—. L. 2. चत of R or चन्द्रत: of Al makes no sense and they are both irrelevant. We have corrected it as चापूता: which, of course, refers to the SV. 1. 1. 17. (तेषामहीयन्ताजाः पृश्नयो वैखानसा वसुरोचिषो ये चापूताः....) previously explained.

P. 22. L. 8. Both the Mss read तल्वरशनम् which has no meaning. Hence we have emended it as लब्धमशनम्.

P. 29. L. 1. PA read प्रथमत्र्यहे which we have split into प्रथमे and त्र्यहे for reasons that in the subsequent sentences there are two more adjectives viz. द्वितीये and तृतीये which relate to त्र्यहे and not to प्रथमत्र्यहे. Therefore in place of द्वितीये and तृतीये we should have either द्वितीयत्र्यहे and तृतीयत्र्यहे respectively or split the compound प्रथमत्र्यहे into प्रथमे and त्र्यहे as we have done. B. supports our contention when it reads द्वितीयत्र्यहे in place of द्वितीये but it however retains तृतीये alone without any change.

—. L. 12. Bharatasvāmin prefers तृतीयं to तृतीय: though alternately he interprets both the variants. We have, however, accepted तृतीय: for the simple reason that the SBV explains here the rules for the observations of the Kṛcchra austerities. Therefore it is more appropriate to have अब्भक्ष: as an adjective of कृच्छ्र: rather than tag it to the observer of the austerity. Further in order to complete the sentence Bharatasvāmin has to import the verb चरेत् in his commentary.

P. 40. L. 1-2 RAl. इत्येते (तैः Al.) पर्वणी इति। पर्वणी (णोः R) दर्शपूर्णमासयोः Both these Mss read पर्वणी in place of पर्वणि. R., however, while interpreting the passage quotes पर्वणोः and not पर्वणी. But what appears clear from the explanation of the term as दर्शपूर्णमासयोः is that पर्वन् is used here in locative singular and not in accusative dual. We have, therefore, emended it as पर्वणि.

—. L. 13. RAl कार्यकारत्वादुभे मासे ग्रा (ग्री R) ह्यो तेन पर्वमात्रेण पर्वमात्रस्य. This passage is corrupt in both the Mss. Further lack of *daṇḍsa* and punctuations adds to the confusion. We have therefore corrected the passage with *daṇḍas* in proper places as; कार्यकारणत्वादुभौ मासौ गृह्येते। न पर्वमात्रम्। पर्वमात्रस्य....

P. 41. L. 4. All the Mss read पवित्रवद्गुणकाय which is wrong. We have, therefore, corrected it as पवित्रवत्त्वगुणकाय.

P. 44. L. 8. In his footnotes Satyavrata Sāmaśramin observes that in the स्वाध्यायपाठ, not six Sāmans are heard of and that the sentence "अत्र संख्याविशेषाश्रवणेऽपि स्वाध्यायपाठे स्तोभविन्यासभेदेनास्यां षड्वर्गसञ्ज्ञा-वादिहापि षट्संख्याश्रणीया, seems to have been interpolated in Sayana's commentary ("लिपिकरप्रमादजोऽत्रत्यलेखः; न हि षट् सामानि श्रूयन्ते स्वाध्यायपाठे"). But this assumption of his seems to be unwarranted. Bharatasvāmin, the commentator of the Sāmaveda, whom Sāyana closely follows, gives a detailed account of this Gāna in षड्वर्ग in his पदार्थमात्रविवृति. अस्य प्रेषा, besides, is found in प्रकृतिगान (ग्राम. 15.6.526. 2-1).

—. L. 9. RAl. स्वाध्यायं प्रतिपादं स्तोभन (त Al) विकारीणा (विकाला R) त (त्त R) तत्त्वादवगम्यते । The passage, as it is, is very corrupt and has been set right by us.

P. 46. L. 9. RAl. The passage "सर्वयोद्यन्त (व्योयन्न Al.) इति भ्रमनिवृत्त्यर्थम्..." is very corrupt. What the commentator observes here is that since सौत्रामणि rite belongs to the पाञ्चरात्रिक group the general rules of this group would become applicable to this as well. But, because it is expressly mentioned here that a performer of this rite should have only milk diet (and not the bread prepared of barley and rice as the rule of the पाञ्चरात्रिक would prescribe), some doubt may arise as to the applicability of the general rules to this rite. Hence the commentator points out that it has become obligatory on the part of the Brāhmaṇa to mention this expressly, if only to save any ambiguity, that the सौत्रामणि too should be performed according to the rules laid down for the पाञ्चरात्रिक rites. Therefore what the line "सर्वयोधन्त ... भ्रमनिवृत्त्यर्थं" means is this: in order to save any doubt or ambiguity as to whether the rest of the rules too are applicable (to the सौत्रामणि)". But both the Mss are here very corrupt and we have left out the unintelligible portion from the line.

P. 49. L. 11. RAl सोमयाग (गा R) । यगे (ग R) ष प्रत्या यम्नायत्वात् । This is very corrupt. We have correctd is as सोमयागेषु एषां प्रत्याम्नातत्वात्.

P. 50. L. 11. RAl कृत्यर्थं for निवृत्त्यर्थं. कृत्यर्थं here makes no sense. Hence we have emended it as निवृत्त्यर्थं.

P. 64. L. 4. In Al this line is not found. In R it is corrupt (गौरवालाघवानुगुम् ). Could it be गौरवलाघवानुगम् ?

P. 66. L. 4. AB क्षमाप्य and P क्षमाग्य. Both forms are ungrammatical for, a ल्यबन्त cannot be formed from a verb without a prefix. But because all Mss have only ल्यबन्त form क्षमाप्य, (or क्षमाग्य) a term, which, though un-Paninian, has been retained.

P. 70. L. 12. All Mss omit तिष्ठेदहनि रात्रावासीत. But from the commentary of Bharatasvāmin, as also of Sāyaṇa, where this sentence is quoted and commented on as part of the text, we learn that this formed part of the original text. Besides, स्थानासनाभ्यां will remain unconnected and inexpressive, and the sentence inconclusive if it was left without a predicate. Only तिष्ठेदहनि रात्रावासीत would make the sentence complete. We have, therefore, accepted it as part of the text on the support of two unerring authorities, Bharatasvāmin and Sāyaṇa.

P. 75. L. 7. The lines: तस्य हन्ता भ्रूणहेति । एतेन ब्रह्महा...शुद्धाशुद्धीययोर्द्वयोरुत्तरम्—are found transposed in both the Mss after दिवा भुक्त्वा ततो भोजन...in the next खण्ड on page 77, line 10. We have restored the line to its proper sequence. This again confirms the assumption that these Mss were either made out from a common exemplar or is copied from one another.

P. 77. L. 9. संबन्धं found in RAl in this place is meaningless and we have, therefore, emended it as सामेदं.

—. L. 10. RAl read भोजनशोध for भोजनं and thereafter transposes the line: तस्य हन्ता भ्रूणहेति । एतेन ब्रह्महा .....शुद्धाशुद्धीययोर्द्वयोरुत्तरम् . See CN 75 above.

P. 79. L. 11. The line: भावनं कालादशणादिष्टासंख्यं, which is corrupt and unintelligible, has been retained as it is, for we could not correct or alter it.

P. 84. L. 8. RAl प्रहरणादिहस्तलकुटदण्डादीना गत्वा. The line is corrupt in both the Mss. We have emended it as प्रहरणार्थं हस्तलकुटदण्डादीना [मुद्यमनं] कृत्वा

—. L. 10. RAl. wrongly read निहत्य देहात्प्रहारेण. Here देहात् was taken from ब्राह्मणदेहात्प्रहारेण of the following sentence.

Identity of errors and of corrupt readings in both the Mss clearly prove the identity of the original Manuscript from which RAl were made out.

15

P. 85. L. 13. AB delete: गां हत्वा द्वादशरात्रम्....इति द्वितीयम् ॥, SVB. 1. 7. 7, and the commentary thereon. But this portion, it is clear, was wantonly removed by the scribes perhaps on sentimental ground. They could not probably so much as think of even a remote possibiliy of a cow being killed by a Hindu, even by accident and the प्रायश्चित्त prescribed for such a grave sin like *go-hatyā* was realized to be too mild to be retained in the text.

P. 87. L. 2. यदितस्तन्वो मम is not found in the Vedas. In his Vedic Concordance, Bloomfield just refers to it as cited in the SVB.

P. 93. L. 6. Sāyaṇa explains त्र्यवरम् as if it were part of the text. We also come across the term in Bharatasvāmin's commentary but without comment. Sāyaṇa's explanation of त्र्यवरम् as आवृत्तिर्विशेष्यते त्र्यवरमिति । त्रिरावृत्तिः जघन्या । तत्तद्दोषगौरवला-घवानुगुण्येन ततोऽधिकं यथाशक्ति आवर्तयेदित्यर्थः—leaves no doubt as to the fact that त्र्यवर is part of the Brāhmaṇa. But we do not find this reading in any of the manuscripts we referred to. Even in P and AB त्र्यवरम् is found only as part of the commentary. However we are almost tempted to include this in the text and read आवर्तयेत् त्र्यवरम्. But we have not done so for want of Mss support.

P. 94. L. 5. RA1 मूषिकाया जग्धे मूषिकाभक्षिते. Here या after मूषिका is due to scribal error. The text according to Bharatasvāmin appears to be मूषिकाजग्धे and not मूषिकजग्धे.

P. 99. L. 6. RA1. सर्वान् प्रशिरवि (वे A1) ष्टे त्वांद्. This is very corrupt. We have, however, emended it as: सर्वान् प्रत्यविशिष्टत्वात्.

P. 101. L. 20. इलान्दं पञ्चानुगानम्. The commentary from तत् अग्ने तव श्रवः to तत् तवश्यावीयमुच्यते is found in no Mss or printed works except in A. The five *anugānas* referred to here are found in (वाचो) व्रतपर्वन् from 206-211. Among these the first, i.e. ऊखा is only a स्तोभ and the rest four are the *gānas* of different योनिमन्त्रs. The collective name for this group of five *gānas* given in the *Āraṇyaka-gāna* is अग्नेरिलान्दं पञ्चानुगानम्, इरान्नं वा. These five are said to be तवश्यावीयम् by the commentator. But in the *Sāma-gānas* these are not named as तवश्यावीय nor are they विकृतिs of the *Yoni-mantra* अग्ने तव श्रवः,—of which in fact no *gāna* as referred to is known in Sama tradition. There is a तवश्यावीय in the आरण्यकगान No. 264 (धर्मविधर्म । (त्रिः)......, which is but a *Stobha* and only one. Again

there is another तवश्यावीय in the आ. गा. परिशिष्ट referred to as शाखान्तरस्थं तवश्यावीयम् which is the विकृति of the Gāyatrī. It is not clear to us, if the Ms A is correct, and whether in the Sāma tradition the अग्नेरिलान्दं पञ्चानुगानम् was known as तवश्यावीयम्. The Ms A gives comparatively correct reading while the Burnell edition is full of mistakes and the Calcutta edition does not help us in any way in this respect. We have accepted the A readings which seemed to us correct. If, however, at any time it is found that what we have assumed is not right the तवश्यावीय referred to here should be deemed to be one mentioned above i. e., आ. गा. No. 264 (स्तोभगान). (Note: 'इडान्तं L. 20 should be read as इलान्दं)

P. 103. L. 7. RAl आगमिर्व्योदिभिः. This has been corrected as आगामिभिर्व्याध्यादिभिः for, the sentence उदुत्तमं वरुणपाशम्...न निगच्छति, in view of the following निगतश्च प्रमुच्यते, clearly means that one will never suffer from any illness or affliction if he chants the Sāman उदुत्तमं......every day.

—. L. 9. RAl. निर्गतरोगतः. This is apparently an explanation of the word निगतः. But निगतः cannot be explained in this way. It can only mean that one who is already afflicted and not one who is recovered from illness or one who is convalescent. We have, therefore, corrected it as नितरां गतः.

P. 106. L. 16. Bharatasvāmin comments on यस्याः जातानि as यस्याः नार्या जातानि अपत्यानि तोकानि from which it appears that the word अपत्यानि formed part of the text. Sāyaṇa too explains जातानि as उत्पन्नानि अपत्यानि. Here also the word अपत्यानि is found. जातानि, of course, can mean उत्पन्नानि but not necessarily अपत्यानि. Since this word appears in both the commentaries it may have been in the original text and the Brāhmaṇa passage might have been यस्याः जातान्यपत्यानि. No support, however, is forthcoming from the Mss we have so far consulted for our assumption.

P. 107. L. 2. The reading in square bracket is reconstructed by us. The Al reads: रसस्याशुषेरेवष उस्य वेण्डसद्दशस्य which is very corrupt and makes no sense.

P. 110. L. 12. RAl अभिमृश्य गानमभिगानम् अभिगीते घृतेन । This is not only corrupt but also un-understandable. We have, therefore, emended it as: अभिमृज्यमानमाज्यमभिगी[य]ते[न]घृतेन.

P. 120. L. 1. R प्रयोगेऽस्मिन्नस्यर्थस्याह Al प्रयोत्तस्मर्थस्याह. Both these readings are corrupt. We have, therefore, emended it as प्रयोगमाह leaving out the other words in between which make no sense.

—. L. 4. RAl गच्छं वेक्षमाणमावर्तयेत्. Here आवर्तयेत् was written by the indifferent scribes by oversight from प्रदक्षिणमावर्तयेत् of the previous line. We have, however, corrected the passage as गच्छन्तमनवेक्षमाणः, deleting आवर्तयेत्.

P. 121. L. 4. Sāyaṇa explains: या रौहिणी वा पौषी वा पौर्णमासी स्यात् as "the full-moon day on which the asterism should be either रोहिणी or पुष्या." Whereas Bharatasvāmin takes रौहिणी with पौर्णमासी and पौषी with अमावास्या. But in the text the word अमावास्या is not found. Therefore it appears that the text commented upon by Bharatasvāmin was या रौहिणी वा पौर्णमासी पौषी वामावास्या स्यात्.

P. 122. L. 10. वामावास्या. See note P. 121, L. 4 above.

P. 131. L. 4. RAl. अजन्तोक्तानि जानं कुर्वन्. This is the explanation of अञ्जयन्. Could it be अञ्जयन् नेत्रस्य नित्यमञ्जनं कुर्वन् ? We have however emended only अञ्जयन्...अञ्जनं कुर्वन्.

P. 138. L. 8. RAl आग्वधवयम्. This is corrupt and meaningless. Are we to take it as आरग्वधमयम् or आमयमयम् ?

P. 140. L. 3. There are several *gānas* known as वामदेव्य in *Grāma-geya* as well as in आरण्यकगान. Among these the *Gānas* in *Grāma-geya* are based on different *Yoni-mantras* while those in the Āraṇyaka-gāna are based on one Mantra alone i. e., कया नश्चित्र आ भुवत्. There is, however, ग्रामगेय 5. 6. 169. 3 which is based on कया नश्चित्र आ भुवत् and which is known as महावामदेव्य. The *Gānas* designated as वामदेव्य are found in ग्रामगेय 5. 6. 171. 1., 8. 6. 286. 1, and 9. 2. 360. 1 without an adjectve, and the वामदेव्य with some adjective is found in ग्रामगेय 1. 3. 22. 3, 3. 7. 69. 1, आ. ग. 1. 2, 13. 1—2, 2. 7. 53. 1. and 2. 7. 56. 1. We have no knowledge which वामदेव्य is meant at the present context, as also in other places where वामदेव्य is referred to. We are told by a teacher of *Sāmagāna* that ग्राम 5. 6. 169. 3 i.e. महावमेदव्य is generally accepted as वामदेव्य if no specific mention is made.

P. 148. L. 4. Both R ond Al are very corrupt. What the commentator means here is that one or more or all of the *gānas* of अपत्य, नित्यवत्सा, रथन्तर, व्याहृतिवर्ग and अरूरुचन् (द्वे) should be

